# NYÁYA SÚTRA VRITTI,

THE

## LOGICAL APHORISMS

OF

## GOTAMA,

WITH A COMMENTARY

BY

*Viswanáth Bhattácharya.*



---

PUBLISHED UNDER THE AUTHORITY OF THE GENERAL COMMITTEE

OF

Public Instruction.

---

PRINTED AT THE EDUCATION PRESS.

---

1828.



श्रीविश्वनाथभट्टाचार्य्य

कृतोन्यायसूत्रवृत्तिनामायं ग्रन्थः

---

श्रीयुक्तकमिट्टिसाहेबानामनुज्ञया

श्रीनिमाइचन्द्रशिरोमणिशोधितः

---

कलिकाताख्यराजधान्यां संस्कृत

पाठशालायन्त्रालये मुद्रितः

---

पञ्चाशदधिकसप्तदशशाकवत्सरे

इंलण्डीयाष्टाविंशत्यधिकाष्टादशवत्सरे ॥





## ॥ न्यायसूत्रवृत्ति निर्घण्टपत्रं ॥

## ॥ न्यायसूत्रस्य प्रथमाध्यायस्य निर्घण्टपत्रं ॥

---

॥ न्यायसूत्रवृत्ति द्वितीयाध्याय निर्घण्टपत्रं ॥

---

॥ न्यायसूत्रस्य तृतीयाध्याय निर्घण्टपत्रं ॥

---

॥ न्यायसूत्रस्य चतुर्थाध्याय निर्घण्टपत्रं ॥

## ॥ न्यायसूत्रस्य पञ्चमाध्यायस्य निर्घण्टपत्रं ॥




॥ श्रीगणेशाय नमः ॥

---

॥ न्यायसूत्रवृत्तिः ॥

वपुर्लीलालक्ष्मीजितमदनकोटिर्व्रजवधूजना १ अध्यायः
नामानन्दं कमपि कमनीयं विरचयन् । स
कोऽपि प्रेमाणं प्रथयतु मनोमन्दिरचरस्त्रिलोकी
लोकानां सजलजलदश्यामलतनुः ॥ १ ॥ संयुक्तां
युक्तरूपामभिनवनिहितालक्तकारक्तभासा सन्ध्या
पीयूषभानोरतिरुचिरतरां चूर्णयन्तीमभिख्यां । मान
व्यामोकनम्रत्रिपुरहरशिरोरम्यभूषाविशेषं भूयोभव्यं
विधातुं चरणनखरुचं भावयामोभवान्याः ॥ २ ॥
यदीयतर्ककिरणैरान्तरध्वान्तसन्ततिं । सन्तस्तरन्ति
भास्वन्तमक्षपादं नमामि तं ॥ ३ ॥ अद्वैतं गुरुधर्मयो
रिव लसत्सामण्डलीमण्डनं रूपं किञ्चन पौरुषं

क

१ अध्यायः गिरइव प्रागल्भ्यसम्पादकं। दाने कर्णमिवावतीर्णमपरं दीने दयादक्षिणं तातं विश्वविसारिचारुयशसं विद्यानिवासं नुमः॥४॥ अलसमतिरपीदं विस्तृतं न्यायशास्त्रं विरचितवहुयत्नोल्लीलया वेत्तु विज्ञः। इति विनिहितचेताः कौशलं कर्त्तुकामो गुरुचरणरजोऽहं कर्णधारीकरोमि॥५॥ विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य। विदुषामतिसूक्ष्मधियाममत्सराणां मुदे भविता॥६॥

प्रयोजनमनभिसन्धाय प्रेक्षावन्तो न प्रवर्त्तन्ते अतः प्रथमं प्रयोजनमभिधानीयं तथा चाहुः सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥ सिद्धो ज्ञातोऽर्थः प्रयोजनं यस्य तत्तथा एवं सिद्धसम्बन्धमित्यपि अतस्तत्प्रतिपादनाय भगवानक्षपादः प्रथमं सूचयति॥

---

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः॥१॥

अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भावः प्रमाणादितत्त्वज्ञानयोर्विषयविषयिभावः प्रमाणादि

शास्त्रयोः प्रतिपाद्यप्रतिपादकभावः शास्त्रनिःश्रेयसयोश्च प्रयोज्य १ अध्यायः
प्रयोजकभावः सम्बन्धः तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं
शास्त्रं तथाच शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहेतु
हेतुमद्भावएव सम्बन्धइति संप्रदायविदः अत्र च सर्व्वपदार्थ
प्राधान्येद्वन्द्वः समासः यद्यपि भेदे द्वन्द्वविधानाद्वत्र च बहूनां
पदार्थानामभेदान्न द्वन्द्वसम्भवस्तथापि पदार्थतावच्छेदकभे
दादेव द्वन्द्वइति न दोषइत्यन्यत्र विस्तरः तत्र च निर्देशे यथा
वचनं विग्रहइति यथाश्रुतभाष्यानुसारिणः प्रमाणानि च प्रमे
यञ्च संशयश्च प्रयोजनञ्च दृष्टान्तश्च सिद्धान्तश्च अवयवाश्च
तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च
छलञ्च जातयश्च निग्रहस्थानानि चेति विग्रहं वर्णयन्ति। संप्र
दायविदस्तु भाष्यस्थवचनपदेन क्वचित्सौत्रं क्वचिदार्थं वचनं
गृह्यते तत्र प्रमाणे प्रमेये च सौत्रं वचनं गृह्यते सप्रयोजन
त्वात् तच्च वक्ष्यते न तु दृष्टान्तादावेकवचनं सप्रयोजनं तथाच
दृष्टान्ते द्विवचनं अन्वयव्यतिरेकिभेदेन दृष्टान्तद्वैविध्यस्य वक्ष्य
माणत्वात् संशये सिद्धान्ते छले च बहुवचनं संशये छले च
त्रैविध्यस्य सिद्धान्ते चातुर्विध्यस्य वक्ष्यमाणत्वात् अन्यथा जाति
निग्रहस्थानयोर्बहुवचनं तत्रापि व्याहन्येत एकवचनस्यैव लक्षण
सूत्रे सत्त्वादिति वदन्ति नव्यास्तु सर्व्वत्र प्रथमोपस्थितैक

१ अध्यायः वचनेनैव विग्रहः नन्वेवं बहुवचनेनैव प्रमाणादीनां बहुत्वं परिच्छिद्यते किंनामाधिकविभागेन नन्वनेकत्र धवखदिरादौ धवस्य खदिरस्य पलाशस्येति न विगृह्यते अतएव प्रयोजनस्यैकवचनान्तत्वेऽपि तद्विभागाकरणेऽपि सुखदुःखाभावतत्साधनभेदेन तस्य बहुत्वं न विरुध्यतइति प्राहुः अत्र च निःश्रेयसे सिद्धे पटादिवत्तत्प्राप्तये न प्रयत्नान्तरमपेक्षितमिति प्रतिपादनायाधिगमपदं । ननु प्रमाणादयः पदार्थाइति शब्दात् प्रथमसूत्रादेव वा तत्त्वज्ञानं स्यादिति चेन्न तेषां विशिष्य ज्ञानं हि तत्त्वज्ञानं तच्चोद्देशलक्षणपरीक्षाप्रकाशकाच्छास्त्रादेव शास्त्रं हि विशिष्टानुपूर्व्वीका पञ्चाध्यायी अध्यायस्त्वाह्निकसमूहः आह्निकन्तु तादृशप्रकरणसमूहः प्रकरणन्तु तादृशसूत्रसमूहः सूत्रन्तु तादृशवाक्यसमूहः वाक्यन्तु तादृशपदसमूहइति वदन्ति अत्र समूहशब्देनानेकत्वं विवक्षितं तेनाध्यायादेराह्निकादिद्वयात्मकत्वेऽपि न क्षतिः अत्र च यद्यपि मोक्षजनकज्ञानविषयत्वेन प्रमेयमेवादौ निरूपयितुमर्हं तथापि प्रमाणस्य सकलपदार्थव्यवस्थापकत्वेन प्राधान्यात्प्रथममुद्देशः ततोऽवसरतोबुभुत्सितप्रमेयस्य ततश्च पदार्थव्यवस्थापनन्यायाधीनतया न्याये निरूपणीयेऽभ्यर्हितयोर्न्यायपूर्व्वाङ्गयोः संशयप्रयोजनयोः तत्राप्यभ्यर्हिततया संशयस्य

प्रथमं तत्र निर्णीतेऽपि मननविधानान्न संशयस्य न्याया १ अध्यायः
ङ्गत्वमिति वाच्यं आचार्य्यसंशयोपगमात् यद्यपि प्रयोजनं
न न्यायाङ्गमपि तु तज्ज्ञानं तथापि तदेव निरूपणीयं न तु
ज्ञाननिरूपणापेक्षेति परप्रत्यायने दृष्टान्तस्य मूलत्वादन
न्तरं दृष्टान्तस्य दृष्टान्तमूलकोन्यायः सिद्धान्तविषयइत्यतोऽ
नन्तरं सिद्धान्तस्य ततश्चावसरतः सिद्धान्ताधीनस्य पञ्चाव
यवरूपस्य न्यायस्य ततश्चैककार्य्यतया न्यायसहकारिणस्त
र्कस्य ततश्च तर्कजन्यतया निर्णयस्य ततश्च निर्णयानुकूलत्वा
द्वादस्य जल्पस्यापि वादकार्य्यकारित्वादनन्तरं जल्पस्य ततश्च
विजयरूपैककार्य्यानुकूलतया वितण्डायाः कथात्रयस्यापि
दूषणसापेक्षतयानन्तरं दूषणेषु निरूपणीयेषु वादे देशनीय
त्वरूपोत्कर्षवत्वाद्धेतुवदाभासमानत्वाच्चादौ हेत्वाभासानां
ततश्च हेत्वाभासोपजीवनेन छलस्य स्वव्याघातकत्वेन अत्यन्ता
सदुत्तरत्वात्ततोजातेः कथावसानत्वेनार्थादनन्तरं निग्रहस्था
नानामिति अत्र च प्रमेयान्तःपातिबुद्धिरूपस्यापि संशयादे
र्निरनुयोज्यानुयोगरूपनिग्रहस्थानान्तःपातिनोश्छलजात्योश्च
प्रकारभेदेन प्रतिपादनं शिष्यबुद्धिवैशद्यार्थमस्तु निग्रहस्था
नान्तःपातिनां हेत्वाभासानां पृथगभिधानप्रयोजनन्तु जानाति
भगवानक्षपादएव भाष्ये तु वादे देशनीयतया हेत्वाभासानां
पृथगुपन्यासइत्युक्तं अत्र वार्त्तिकं यदि वादे देशनीयत्वात्

१ अध्यायः पृथगभिधानं तदा न्यूनाधिकाय सिद्धान्तानां वादे देशनीयत्वात्पृथगभिधानं स्यात् यदि पृथगभिधानाद्वादे देशनीयत्वं तदा संशयादीनामपि वादे देशनीयत्वं स्यात् तस्माद्दान्वीक्षिकीत्रयीवार्त्तादण्डनीतिरूपविद्याप्रस्थानभेदज्ञापनार्थं संशयादेर्हेत्वाभासस्य च पृथग्वचनमिति तदप्यसत् निग्रहस्थानान्तर्गतत्वेनैव तन्निरूपणेन प्रस्थानभेदसम्भवात् वयन्तु हेत्वाभासानां न निग्रहस्थानत्वं तथा सति सर्व्वत्र हेत्वाभाससत्त्वात् सर्व्वस्यैव निगृहीतत्वापत्तेः तस्मात् हेत्वाभासप्रयोगो निग्रहस्थानं तद्विभाजकसूत्रस्थहेत्वाभासपदञ्च तत्प्रयोगपरं तत्र च प्रयोगस्य न लक्षणमपेक्षणीयं अपि तु हेत्वाभासानामित्यत उक्तं हेत्वाभासाश्च यथोक्ता इति चरमसूत्रं न च हेत्वाभासस्यावच्छेदकप्रवेशादेव पृथङ्निरूपणापेक्षेति वाच्यं तथा सति प्रमाणतर्कसाधनोपालम्भ इति वादावच्छेदकप्रमाणादेरपि पृथङ्निरूपणापत्तेरिति युक्तमुत्पश्यामः। अत्र केचित्सूत्रादौ मङ्गलाकरणेन मङ्गलं न प्रामाणिकमित्यत्र सूत्रकृतां तात्पर्य्यं वर्णयन्ति तदसत् कृतस्याप्यनिबन्धनसम्भवात् विघ्नाभावनिर्णयेनाकरणसम्भवाच्च वयन्तु प्रमाणं प्राणनिलय इति भगवन्नामगणान्तःपातिप्रमाणशब्दस्योच्चारणमेव मङ्गलमिति ब्रूमः अत्र च उद्देशलक्षणपरीक्षाणां पूर्व्वपूर्व्वसापेक्षत्वात् प्रथममुद्देशानन्तरं लक्षणं प्रसङ्गाच्छल

परीक्षेति सोद्देशपदार्थलक्षणकलपरीक्षा प्रथमाध्यायार्थः १ अध्यायः
तत्र च सपरिकरन्यायलक्षणं प्रथमाह्निकार्थः तत्र च सप्र
योजनाभिधेयप्रतिपादकं प्रथमद्वितीयसूत्राभ्यामेकं प्रकरणं
ततः प्रमाणलक्षणप्रकरणं ततः प्रमेयलक्षणप्रकरणं ततो
न्यायपूर्व्वाङ्गप्रकरणं ततोन्यायसिद्धान्तप्रकरणं ततोन्याय
स्वरूपप्रकरणं ततोन्यायोत्तराङ्गप्रकरणमिति प्रथमाह्निके
सप्त प्रकरणानि श्रवणादनु पश्चादीक्षा अन्वीक्षा उन्नयनन्त
न्निर्वाहिका सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते
तथा च न्यायोमीमांसा धर्म्मशास्त्राणीति श्रुतिः पुराणन्याय
मीमांसेत्यादिस्मृतिः मीमांसा न्यायतर्कश्च उपाङ्गः परिकी
र्त्तितइति पुराणं। त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीं।
आन्वीक्षिकीञ्चात्मविद्यां वार्त्तारम्भांश्च लोकतइति मनुः
तथा यस्तर्केणानुसन्धत्ते सधर्म्मं वेद नेतरइत्यादि मोक्षधर्म्मे
तत्रोपनिषदं तात परिशेषन्तु पार्थिव। मथ्नामि मनसा तात
दृष्ट्वा चान्वीक्षिकीं परामित्युपनिषदर्थश्चान्वीक्षिक्यनुसारी ग्राह्य
इत्युक्तमिति ननु तत्त्वज्ञानस्य न साक्षादेव निःश्रेयसहेतुत्वं
निःश्रेयसं तावद्विविधं परापरभेदात् तत्रापरं जीवन्मुक्ति
लक्षणं तत्त्वज्ञानानन्तरमेव तदप्यवधारितात्मतत्त्वस्य नैरन्त
र्य्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्म्मोपभुञ्जानस्य परन्तु
क्रमेण तत्र क्रमप्रतिपादनायेदं सूत्रमिति ॥ १ ॥

१ अध्यायः दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥

दुःखादीनां मध्ये यदुत्तरोत्तरं तेषामपाये तदनन्तरस्य तत्संनिहितस्य पूर्व्वपूर्व्वस्यापायादपवर्गःप्रयोजकत्वं प्रयोज्यत्वं वा पञ्चम्यर्थः दण्डाभावाद्घटाभावइतिवत्स्वरूपसम्बन्धविशेष एव तत् तदयमर्थः तत्त्वज्ञानेन विरोधितयापहृते मिथ्याज्ञाने कारणाभावाच्च निवृत्ते रागद्वेषात्मके दोषे तदभावाच्च प्रवृत्तेर्धर्माधर्मात्मिकाया अनुत्पत्तौ तदभावाच्च जन्मनोविशिष्टशरीरसम्बन्धस्याभावे दुःखाभावादपवर्गः यद्यपि ज्ञानिनोऽपि रागादयस्तिष्ठन्ति तथाप्युत्कटरागाद्यभावे तात्पर्य्यं यद्यपि दोषाणां न धर्मादिजनकत्वं व्यभिचारात्तथापि तत्तद्दोषाणां तत्तद्धर्मादिहेतुत्वाद्दोषापाये धर्माद्यपायः वस्तुतोविनापीच्छां गङ्गाजलसंयोगादितोधर्मादिसम्भवाद्व्यभिचारः तस्मात् मिथ्याज्ञानजवासनैवात्र दोषः तस्याश्च मिथ्याज्ञाननाशात् तत्कालीनतत्त्वज्ञानजवासनातोवा नाशइत्याशयइत्यपि वदन्ति यद्यपि दुःखापायान्नापवर्गः किन्तु सएव सः तथाप्यभेदएव तत्र पञ्चम्यर्थः अपवर्गपदं वा तद्व्यवहारपरं अनन्तरपदेन जन्मान्तरमेव परामृश्यतइति तु न व्याख्यानं दुःखपदवैयर्थ्यापत्तेः दुःखानुत्पत्तेश्चरमदुःखध्वंसप्रयोजकत्वं कल्पितइत्याशयेनेदमित्यपि कश्चित् ॥ २ ॥

इति सूत्रवृत्तौ सप्रयोजनाभिधेयप्रकरणम् ॥ १ ॥

अथ यथोद्देशं लक्षणस्यापेक्षितत्वात् प्रथमोद्दिष्टप्रमाणं १ अध्यायः लक्षयति विभजते च।

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

अत्र तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानं प्रशब्द विशिष्टेन माधातुना प्रत्याय्यते तत्करणत्वं प्रमाणत्वं ज्ञानं चात्रानुभवोविवक्षितस्तेन स्मृतिकरणे नातिव्याप्तिः लक्षितानां प्रमाणानां विभागः प्रत्यक्षानुमानोपमानशब्दाइति विभागस्योद्देशएवान्तर्भूतत्वादयं विशेषोद्देशः प्रत्येकलक्षणन्तु वक्ष्यते ॥ इति त्रिसूत्री वृत्तिः समाप्ता ॥ ३ ॥

अथ विभक्तानि यथाक्रमं लक्षयितुमारभते।

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षं ॥ ४ ॥

अत्र प्रतिगतमक्षं प्रत्यक्षमिति योगादिन्द्रियवाचकत्वात् प्रत्यक्षशब्दस्य प्रस्तुतत्वाच्च करणलक्षणस्य प्रमितिलक्षणं यद्यप्यनुचितं तथापि यतइत्यध्याहारेण प्रत्यक्षप्रमाकरणलक्षणे वाच्ये तदेकदेशप्रमास्वरूपे ज्ञाते तत्करणत्वं सुज्ञेयमित्याशयेन वा सङ्गमनीयं आत्ममनःसंयोगजन्यसुखादिवारणाय ज्ञानमिति यद्यपि तज्जन्यत्वात् ज्ञानमात्रेऽतिव्याप्तिरीश्वरप्रत्यक्षे चाव्याप्तिस्तथापि साक्षात्कारोमीत्यनुव्यवसायसिद्धसा

१ अध्यायः ज्ञात्वजात्यवच्छिन्ने ज्ञातमित्यन्तस्य तात्पर्य्यं यदा इन्द्रियार्थ सन्निकर्षोत्पन्नमिति सावधारणं इन्द्रियार्थसन्निकर्षातिरि क्तानुत्पन्नं अतिरिक्तं चात्र ज्ञानं तेन ज्ञानाकरणकमित्यर्थः भ्रमवारकमव्यभिचारीति भ्रमभिन्नमित्यर्थः इदञ्चांशिकभ्र मस्यालक्ष्यत्वेन लक्ष्यत्वे तु तद्वति तत्प्रकारकत्वं निर्व्विकल्पकस्य लक्ष्यत्वे तदभाववति तदप्रकारकत्वमर्थः तस्य विभागः अव्यपदेश्यं व्यवसायात्मकमिति निर्विकल्पकं सविकल्पकं चेति द्विविधं प्रत्यक्षमित्यर्थः ॥ ४ ॥

अनुमानं लक्षयति विभजते च ।

अथ तत्पूर्व्वकं त्रिविधमनुमानं पूर्व्ववच्छेषव त्सामान्यतोदृष्टञ्च ॥ ५ ॥

आनन्तर्य्यबोधकाथशब्दो हेतुहेतुमद्भावसङ्गतिसूचनाय तत्पूर्व्वकं प्रत्यक्षपूर्व्वकं प्रत्यक्षं प्रत्यक्षविशेषो व्याप्त्यादिविषयक स्तेन व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यत्वं लभ्यते अनुमानं अनु मितिः यतदत्यध्याहारेण च करणलक्षणं अथ वा करण लक्षणमेवेदं तत्रानुमानमिति करणल्युटा अनुमितिकरण मिति समाख्याबलादेव लब्धं तत्र व्याप्तिज्ञानं प्रत्यक्षपूर्व्वकं सहचारप्रत्यक्षपूर्व्वकं विभजते त्रिविधमिति पूर्व्वं कारणं तद्वत् तल्लिङ्गकं यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानं शेषः कार्य्यं तल्लि

ङ्गकं शेषवत् यथा नदीवृद्ध्या वृष्ट्यनुमानं सामान्यतोदृष्टं कार्य्य १ अकार्य
कारणभिन्नलिङ्गकं यथा पृथिवीत्वेन द्रव्यत्वानुमानं अथ वा
पूर्व्वं अन्वयस्तद्वत्केवलान्वयीत्यर्थः यथा अभिधेयं प्रमेयत्वादि
त्यादि शेषोव्यतिरेकस्तद्वत्केवलव्यतिरेकीत्यर्थः यथा पृथिवी
इतरेभ्योभिद्यते गन्धवत्त्वादित्यादि सामान्यतोदृष्टं अन्वय
व्यतिरेकि यथा वह्निमान् धूमादित्यादि ॥ ५ ॥

उपमानं लक्षयति ।

प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं ॥ ६ ॥

प्रसिद्धस्य पूर्व्वप्रमितस्य गवादेः साधर्म्यात्सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुप मानमुपमितिर्यत इत्यध्याहारेण च करणलक्षणं अथ वा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदं अत्र च वैध र्म्योपमितिमपि मन्यन्ते टीकाकृतः यथाच अतिदीर्घग्रीवत्वादि पश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रहः एवमन्योऽ प्युपमानस्य विषय इति भाष्यं तथा मुद्गपर्णीसदृशीओषधी विषं हन्तीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीत्युपमित्या विषयीक्रियत इत्यादि ॥ ६ ॥

शब्दं लक्षयति।

आप्तोपदेशः शब्दः ॥ ७ ॥

शब्दइति लक्ष्यकथनं तदर्थः प्रमाणशब्दइति आप्तोपदेश इति लक्षणं आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान् तस्योपदेश इत्यर्थः प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्दइति फलितार्थः अथ वा आप्तोयथार्थउपदेशः शाब्दबोधोयस्मात्तत् शाब्द त्वञ्च जातिविशेषस्तथाच यथार्थशाब्दज्ञानकरणत्वमर्थः अत्र च विशेष्यावृत्त्यप्रकारकत्वतद्वतितत्प्रकारकत्वादिप्रमालक्षणा नामेकं लक्षणे परञ्च लक्ष्यतावच्छेदके निवेशनीयमतोना भेदः ॥ ७ ॥

विभजते।

सद्विविधोदृष्टादृष्टार्थत्वात् ॥ ८ ॥

सप्रमाणशब्दः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्या र्थकोदृष्टार्थकः शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टा र्थकः तथा च दृष्टार्थकत्वादृष्टार्थकत्वभेदात्प्रमाणशब्दस्य द्वैवि ध्यमित्यर्थः ॥ ८ ॥

समाप्तं प्रमाणलक्षणप्रकरणं ॥ २ ॥

प्रमेयं विभजते लक्षयति च । 

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं ॥ ९ ॥

अत्र तु शब्दः पुनरर्थे तथाचैतेषां पुनः प्रमेयत्वं न तु प्रमाविषयत्वेन संयोगादीनामपि प्रमेयशब्दोहि वादादिशब्दवत् परिभाषाविशेषेण द्वादशसु प्रवर्त्तते तत्र च प्रकृष्टं मेयं प्रमेयमिति योगार्थः प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं मोक्षहेतुधीविषयत्वं वा कृत्वा च तावदन्यान्यत्वमर्थः लक्षणमपि तदेव प्रमेयं किमित्याकाङ्क्षायामात्मादयोदर्शिताइत्यतो वचनभेदेऽपि नानन्वयः वेदाः प्रमाणमित्यादावप्येवं अन्यथा आत्मसत्त्वे विगतिः स्यात्तथा च वक्ष्यते प्रमेयत्वेनैक्यमिति प्रतिपादनाय अन्यतमाज्ञानेऽपि नापवर्गइति प्रतिपादनाय वा प्रमेयमित्येकवचनमित्यन्ये तच्चिन्त्यं अत्रापि आत्मा च शरीरञ्च इन्द्रियाणि च अर्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलञ्च दुःखञ्च अपवर्गश्चेति यथावचनं विग्रहं वर्णयन्ति अत्र प्राधान्यात्कारणरूपषट्कमभिधाय कार्य्यरूपप्रमेयषट्कमभिहितं तत्र पूर्व्वपूर्व्वस्य प्राधान्यात् प्रथममुद्देशइति वदन्ति ॥ ९ ॥

तत्र प्रथमोद्दिष्टमात्मानं लक्षयति।

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनोलिङ्गं ॥१०॥

अत्र चात्मनः प्रत्यक्षत्वाल्लिङ्गकथनमसङ्गतं न च शरीरातिरिक्तव्युत्पादनार्थं तदिति वाच्यं अग्रिमपरीक्षावैयर्थ्यापत्तेः लक्षणाकथनेन न्यूनत्वं चेति चेल्लिङ्गपदस्य लक्षणार्थत्वात् न च लिङ्गमित्येकवचनेन मिलितानां लक्षणत्वं प्रतीयते तच्चायुक्तं वैयर्थ्यादिति वाच्यं किं लक्षणमित्याकाङ्क्षायामिच्छादीनामभिधानान्मिलितं लक्षणमिति प्रत्यायकाभावात् तथाच प्रत्येकमेव लक्षणं अत्र ज्ञानेच्छाप्रयत्नानामात्ममात्रस्य लक्षणत्वं सुखदुःखद्वेषाणां संसारिणां लक्षणत्वमिति ॥ १० ॥

क्रमप्राप्तं शरीरं लक्षयति।

चेष्टेन्द्रियार्थाश्रयः शरीरं ॥ ११ ॥

अत्र चेष्टादिमिलिताश्रयत्वं न लक्षणं वैयर्थ्यादपि त्वाश्रयपदस्य प्रत्येकमन्वयाच्चेष्टाश्रयत्वादिलक्षणत्रये तात्पर्य्यं चेष्टात्वञ्च प्रयत्नजन्यतावच्छेदकोजातिविशेषः न च शरीरावयवेऽतिव्याप्तिः अन्त्यावयवित्वेन विशेषणात् न च निष्क्रियशरीरेऽव्याप्तिः [illegible] मानाभावात् अतएवाह इन्द्रियाश्रयइति इन्द्रियाश्रयत्वञ्च अवच्छेदकताख्यस्वरूपसम्बन्धविशेषेण चक्षु[illegible]देवदत्तोऽयमित्यादिप्रतीतेः अर्थाश्रयत्वमित्यत्रार्थशब्दो

न रूपादिपरस्तदाश्रयत्वस्य घटादावतिव्याप्तेः किन्तु सुख १ अध्यायः
दुःखान्यतरपरः अतएव भाष्यं यस्मिन्नायतने सुखदुःखयोः
प्रतिसम्वेदनं प्रवर्त्तते सएषामाश्रयस्तच्छरीरमिति वस्तुतस्त
न्यतराश्रयत्वमपि तल्लक्षणं किन्तु सुखाश्रयत्वं दुःखाश्रयत्व
ञ्चेति लक्षणद्वये तात्पर्य्यं शरीरस्य तदाश्रयत्वमवच्छेदकता
सम्बन्धेन हस्तादेरलक्ष्यत्वे लक्ष्यावयवित्वेन विशेषणीयं स्वर्गि
शरीरे नारकिशरीरे वृक्षादौ सुखदुःखस्वीकारान्नाव्याप्तिः
न च तच्छून्यखञ्जशरीरेऽव्याप्तिः सुखाद्याश्रयवृत्तिद्रव्यत्व
व्याप्यजातिमत्त्वस्य विवक्षितत्वात् तादृशजातिश्च मनुष्यत्वचैत्र
त्वादिः कल्पभेदेन नरसिंहशरीराणां भेदान्नरसिंहत्वजाति
मादाय नरसिंहशरीरे लक्षणसमन्वयइति ॥ ११ ॥

इन्द्रियं विभजते लक्षयति च।

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः॥१२॥

यद्यपि मनसोऽपीन्द्रियत्वमस्त्येव तथापि घ्राणेत्यादेरुप
लक्षणपरत्वान्न दोषः वस्तुतस्त्विन्द्रियाणीत्यस्य वहिरिन्द्रि
याणीत्यर्थः तेन भूतेभ्यइत्यस्य नासङ्गतिः अत्र चैतानीन्द्रिया
णीति वदता घ्राणाद्यन्यान्यत्वं लक्षणमिति सूचितं प्रत्यक्षजन
कतावच्छेदकतया इन्द्रियत्वमखण्डोपाधिरूपमित्यन्ये घ्राण
त्वादिकं जातिविशेषरूपं कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं घ्राणा

१ अध्यायः दीनि किंप्रकृतिकानीत्याकाङ्क्षायामाह भूतेभ्यइति तेनेन्द्रिया णामहङ्कारप्रकृतिकत्वं नेति मन्तव्यं व्युत्पादयिष्यते चेदं तृती याध्याये अत्र घ्राणादीनां चतुर्णां पृथिव्यादिजन्यत्वं सम्भवति श्रोत्रस्य कर्णशष्कुल्यवच्छिन्नाकाशस्य कर्णशष्कुल्याजन्यत्वादेव जन्यत्वव्यपदेशः अथवा अभिन्नानीति पूरयित्वा भूताभिन्ना नीति व्याख्येयं घ्राणादीत्यस्योपलक्षणपरत्वे तु भूतेभ्यइति बहिरिन्द्रियपरं ॥ १२ ॥

भूतान्येव कानीत्याकांक्षायामाह।

पृथिव्यापस्तेजोवायुराकाशमिति भूतानि ॥ १३ ॥

आरम्भे परस्परानपेक्षत्वसूचनायासमासकरणं भूतत्वन्तु बहिरिन्द्रियग्रहणायोग्यविशेषगुणवत्त्वं पृथिवीत्वादयस्तु जाति विशेषाइति ॥ १३ ॥

क्रमप्राप्तमर्थं विभजते लक्षयतिच।

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥

वैशेषिकाणां द्रव्यगुणकर्मस्वर्थशब्दाभिधेयत्वमतः पञ्चा नां गन्धादीनामेव कथं तत्त्वमित्याशङ्कानिरासाय तदर्था इत्युक्तं तेषामिन्द्रियाणामर्थाविषयाउद्दिष्टाअपि तएवेत्या

र्थः इत्यस्य तदर्थत्वं लक्षणमिति मन्तव्यं तच्छब्देन वहिरि १ अध्यायः
न्द्रियाणि परामृश्यन्ते तथा चैकैकवहिरिन्द्रियमात्रग्राह्यविशेष
गुणत्वं वहिरिन्द्रियद्वयाग्राह्यवहिरिन्द्रियग्राह्यगुणत्वं वा तदर्थः
पृथिव्यादिगुणा इति लक्ष्यनिर्देशस्ते के गुणा इत्याकाङ्क्षायां
गन्धेत्यादि पृथिव्यादीनां गुणा इति षष्ठीसमासोभाष्यसंमत
स्तेन गुणगुणिनोरभेदो नेति सूचितं ॥ १४ ॥

बुद्धिं लक्षयितुमाह ।

बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरं ॥ १५ ॥

अनर्थान्तरं समानार्थकं न तु सांख्यानामिव बुद्धितत्त्वस्य
महत्तत्वापरपर्य्यायस्य परिणामविशेषो ज्ञानं यथा चैतत्तथा
वक्ष्यते तथा च बुद्ध्यादिपदवाच्यत्वमनुभवसिद्धज्ञानत्वजाति
रेव वा लक्षणमिति भावः ॥ १५ ॥

मनो लक्षयति ।

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गं ॥ १६ ॥

युगपत् एककाले एकात्मनीति पूरणीयं ज्ञानानामनुत्प
त्तिर्यतः स एव धर्मो ज्ञानकरणाणुत्वं मनसो लिङ्गं लक्षणमि
त्यर्थः तथाहि चक्षुरादिषु विषयसम्बन्धेऽपि यस्यासत्त्वभावा

१ अध्याय: ईकं न ज्ञानं जनयति तत्सम्बन्धादपरस्य ज्ञानं जनयति तदेव चाणु निखिलज्ञानजनकं सुखादिसाक्षात्काराऽसाधारण कारणं तदेकमेव लाघवात्सिद्धं मनइत्यर्थः एवमव्याख्याने च लक्षणप्रकरणे प्रमाणोपन्यासोऽसङ्गतः स्यादिति अन्येतु सति धर्म्मिणि लक्षणचिन्तेत्यतोमनःसाधनाय युगपदिति सूत्रं इत्यस्य मनःसिद्धौ निष्पर्श्माणुत्वादिकं लक्षणं सुकरमित्या शयइति वदन्ति ॥ १६ ॥

प्रवृत्तिं लक्षयति विभजते च।

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥ १७ ॥

अत्र च प्रवृत्तित्वं रागजन्यतावच्छेदकोजातिविशेषः सएव लक्षणं ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तथा जीवनयोनि यत्ने निवृत्तौ तु मानाभावात् तत्सद्भावेऽपि प्रवृत्तित्वं नित्य यत्नसाधारणं तद्व्यावृत्तं वा तथा द्वन्द्वान्तरश्रुतारम्भपदस्य प्रत्येकमन्वयाद्वागारम्भादिभेदेन त्रिविधा प्रवृत्तिः बुद्धिशब्दे नात्र मनोऽभिप्रेतमिति शरीरशब्दस्य चेष्टावत्त्वेन हस्तादि साधारणः तथा वचनानुकूलोयत्नोवागारम्भः वचनानुकूलः शरीरगोचरोयत्नश्चेष्टानुकूलयत्नोवा शरीरारम्भः एतद्द्वय भिन्नोयत्नोबुद्ध्यारम्भः स च ध्यानोदयादेव दर्शनाद्यनुकूलः

पर्य्यवस्यति प्राचस्तु सामान्यविशेषलक्षणं च दृष्टजनकत्वं निवेश्य १ अध्यायः
यन्ति इयञ्च कारणरूपा प्रवृत्तिः कार्य्यरूपा तु धर्माधर्मा
त्मिकेति ॥ १७ ॥

दोषं लक्षयति ।

प्रवर्त्तनालक्षणादोषाः ॥ १८ ॥

दोषाइति बहुवचनं रागद्वेषमोहात्मकलक्ष्यत्रयज्ञाप
नाय प्रवर्त्तना प्रवृत्तिजनकत्वं तदेव लक्षणं येषां यद्यपीदं
शरीरादृष्टेश्वरेच्छादावतिव्याप्तं तथापि लौकिकप्रत्यक्ष
विषयकत्वे सतीति विशेषणीयं योगादिगोचरप्रमावारणाय
प्रामान्यत्वे सतीति विशेषयन्ति ॥ १८ ॥

प्रेत्यभावं लक्षयति ।

पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

प्रेत्य मृत्वा भावोजननं प्रेत्यभावः तत्र पुनरित्यनेनाभ्या
सकथनात् प्रागुत्पत्तिस्ततोमरणं ततउत्पत्तिरिति प्रेत्य
भावोजननादिरपवर्गान्तः एतत्ज्ञानञ्च वैराग्यउपयुज्यते
इति प्रेत्येति न व्यर्थं तदीयमरणञ्च तदीयजीवनादृष्टना

 शरीरत्वदीयचरमप्राणसंयोगध्वंसस्तदीयप्राणध्वंसो वा तदीयो त्पत्तिस्तु तदीयविजातीयशरीराद्यप्राणसंयोगइति ॥ १९ ॥

फलं लक्षयति।

प्रवृत्तिदोषजनितार्थः फलं ॥ २० ॥

अत्र च मुख्यं फलं सुखदुःखोपभोगः तथाच भाष्यं सुख दुःखसंवेदनं फलं तत्र च धर्माधर्मादृत्तेः प्रयोजकत्वात्तत्र च दोषस्य हेतुत्वात् प्रवृत्तिदोषजनितेत्युक्तं लक्षणन्तु सुख दुःखान्यतरसाक्षात्कारइति गौणं फलन्तु शरीरादिकं सर्व्व मेव तथाच भाष्यं तत्पुनर्देहेन्द्रियबुद्धिषु सतीषु भवतीति सहदेहेन्द्रियादिभिः फलमभिप्रेतं तथाहि प्रवृत्तिदोषजनि तोऽर्थः फलमेतत्सर्व्वं भवतीति इत्यस्य जन्यत्वमेव फलत्वं प्रवृ त्तिदोषजनितइति तु निर्वेदोपयोगादुक्तं ॥ २० ॥

दुःखं लक्षयति।

बाधनालक्षणं दुःखं ॥ २१ ॥

बाधना पीडा तदेव लक्षणं स्वरूपं यस्य तथाचानुभव सिद्धदुःखत्वजातिरेव लक्षणं शरीरेन्द्रियार्थेषु दुःखसाधनत्वा त्सुखे च दुःखानुषङ्गात् दुःखव्यवहारो गौणइति अतएवाग्रिम सूत्रे तत्पदेन दुःखपरामर्शः ॥ २१ ॥

अपवर्गं लक्षयति ।

तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तस्य दुःखस्य अत्यन्तविमोक्षः स्वसमानाधिकरणदुःखासमानकालीनोध्वंसः तस्य च जन्मापायादेव संभवइत्याशयेन दुःखेन जन्मनात्यन्तं विमुक्तिरपवर्गइति भाष्यं दुःखेन दुःखानुषङ्गेणेत्यर्थः ॥ समाप्तं प्रमेयलक्षणप्रकरणं ॥ २२ ॥

क्रमप्राप्तं संशयं लक्षयति ।

समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षोविमर्शः संशयः ॥ २३ ॥

संशयइति लक्ष्यनिर्देशः विमर्शइत्यत्र विशब्दोविरोधार्थः मृशिर्ज्ञानार्थः एकस्मिन् धर्म्मिणीति पूरणीयं तेन एकधर्म्मिणि विरोधेन भावाभावप्रकारकं ज्ञानं संशयः तत्र कारणमुखेन विशेषलक्षणान्याह समानेत्यादि उपपत्तिर्ज्ञानं तथाच समानस्य विरुद्धकोटिद्वयसाधारणधर्म्मस्य ज्ञानादित्यर्थः अनेकधर्म्मः असाधारणधर्म्मः तज्ज्ञानादित्यर्थः तथाच साधारणधर्म्मवद्धर्म्मिज्ञानजन्योऽसाधारणधर्म्मवद्धर्म्मिज्ञानजन्यश्चेत्यर्थः विप्रतिपत्तिर्विरुद्धकोटिद्वयोपस्थापकः शब्दस्तस्मादित्यर्थः यद्यपि शब्दस्य न संशायकत्वं तथापि शब्दात्कोटिद्वयोपस्थितौ मानसः संशयइति वदन्ति उपलब्धेर्ज्ञानस्य अनुपलब्धेर्वा

१ अथाय: तिरेकज्ञानस्य याऽव्यवस्था तद्विषयकत्वानिर्द्धारणं प्रामाण्य संशय इति फलितोऽर्थः अन्ये तु उपलब्ध्यव्यवस्थाप्रामाण्य संशयः अनुपलब्धिरुपलब्धिविरोधिभ्रमत्वं तदव्यवस्था तत्सं शय इत्याहुः वस्तुतस्तु प्रामाण्यसंशयस्य न संशयहेतुत्वं किं त्वगृहीताप्रामाण्यकज्ञानस्य विरोधितया सति प्रामाण्यसंशये तज्ज्ञानस्याविरोधितया साधारणधर्म्मदर्शनादित एव संश योत्पत्तिरिति उपलब्धीत्यादिकं तादृशस्थले संशयोभवतीत्ये तावन्मात्रपरं चकारोव्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समु च्चिनोतीति वदन्ति विशेषापेक्षः कोटिस्मरणसापेक्षः वस्तुतस्तु संशयधारावाहिकत्वं स्यादतआह विशेषेति विशेषं विशेष दर्शनं अपेक्षते निवर्त्तकत्वेन तथाच विशेषदर्शननिवर्त्त्यत्वकथन मुखेन विशेषादर्शनजन्यसंशय इत्युक्तं ॥ २३ ॥

क्रमप्राप्तं प्रयोजनं लक्षयति ।

**यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनं ॥ २४ ॥**

अधिकृत्य उद्दिश्य तथाच प्रवृत्तिहेत्विच्छाविषयत्वं प्रयो जनत्वं विषयत्वं साध्यताख्यविषयताविशेषः ज्ञानसुखत्वादि वारणं प्रवृत्तिहेत्विति स्वरूपकथनं तच्चकचूडामणिसुमेर्व्वादि प्राप्तिवारकं तदिति केचित् अत्र च निरुपाधीच्छाविषयत्वात् सुखदुःखाभावयोर्मुख्यप्रयोजनत्वं तदुपायस्य तु तदिच्छाधी नेच्छाविषयत्वाद्गौणप्रयोजनत्वमिति ॥ २४ ॥

क्रमप्राप्तं दृष्टान्तं लक्षयति।

लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः प्रतिपाद्य इति फलितोऽर्थः परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः प्रतिपादकइति फलितार्थः तथाच प्रतिपाद्यप्रतिपादकयो रिति पर्यवसन्नं वक्तृवचनं कथावक्तृत्वमभिप्रेत्य बुद्धेः साध्य साधनोभयविषयिण्यास्तदभावविषयिण्यावा साम्यं अविरोधो यस्मिन्नर्थे सोऽर्थोदृष्टान्तः वादिप्रतिवादिनोः साध्यसाधनो भयप्रकारकतदभावद्वयप्रकारकान्यतरनिश्चयविषयोदृष्टा न्तइति पर्य्यवसितोऽर्थः ॥ समाप्तं न्यायपूर्व्वाङ्गप्रकरणं ॥ २५ ॥

क्रमप्राप्तं सिद्धान्तं लक्षयति।

तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥

तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य तादृशोयोऽ भ्युपगमस्तस्य समीचीनतयाऽसंशयरूपतया स्थितिस्तथाच शास्त्रितार्थनिश्चयः सिद्धान्तः अत्र चाभ्युपगम्यमानोऽर्थः सिद्धान्तइति भाष्यं अभ्युपगमः सिद्धान्तइति वार्त्तिकटीका तथाच विरोधः शङ्कनीयः आचार्य्यैः परिहृतत्वात् तथाच सिद्धान्तनिबन्धः अर्थाभ्युपगमयोर्गुणप्रधानभावस्य विवक्षा

१ अध्यायः इन्द्रियनानात्वं तथाच यदर्थसिद्धिं विना योऽर्थः शब्दादनुमानाद्वा न सिध्यति सोऽधिकरणसिद्धान्त इति वस्तुतस्तु शब्दत्वमनुमानत्वं चाविवक्षितं प्रमाणमात्रमपेक्षितं अतएव प्रत्यक्षेण स्थूलत्वसाधनानन्तरमुक्तमात्मतत्त्वविवेके सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलत्वसिद्धौ क्षणभङ्गभङ्ग इति तत्र च वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति वार्त्तिकफक्किकां लिखित्वा येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जन्यमानायां योऽन्यार्थःसिध्यति स तथेत्यर्थः इति व्याख्यातं दीधितिकृता एवं हेतुरीदृशः पक्षस्य वाक्यार्थ इति टीकावचनं च उपलक्षणमेतदित्युक्तं तत्र तत्र विभिव्येव लक्षणं कार्य्यं यत्तु जनकीभूतव्यापकताज्ञाने व्यापककोटावेव विषयः प्रकृतानुमित्या व्यापककोटौ विषयीकृतः शाब्दजनकपदार्थज्ञानविषयत्वे सति शाब्दविषयस्येति इयमधिकरणसिद्धान्त इति तत्र इन्द्रियनानात्वादौ भाष्याद्युदाहृतेऽव्याप्तेरिति ॥ ३० ॥

अभ्युपगमसिद्धान्तं लक्षयति ।

**अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥**

अपरीक्षितस्य साक्षादसूत्रितस्य विशेषपरीक्षणं विशेषधर्म्मकथनं अभ्युपगमादिति ज्ञापकत्वे पञ्चमी अभ्युपगमज्ञापक

मित्यर्थः विशेषपरीक्षणाज्ज्ञायते सूत्रकृतोऽभ्युपगतमिदमिति १ अध्यायः तथाच साक्षादसूत्रिताभ्युपगमोऽभ्युपगमसिद्धान्तः यथा मनसइन्द्रियत्वमिति ॥ ३१ ॥

समाप्तं न्यायाश्रयसिद्धान्तलक्षणप्रकरणं ॥ ५ ॥

क्रमप्राप्तानवयवांल्लक्षयितुं विभजते ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥

अनेन विभागेन प्रतिज्ञाद्यन्यतमत्वमवयवत्वमिति लक्षणं सूचितं अत्र च प्रतिज्ञादीनां पञ्चानामवयवत्वकथनाद्दशावयववादोव्युदस्तइति मन्तव्यं ते च यथा दर्शिताभाष्ये जिज्ञासासंशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति एते प्रतिज्ञादिसहितादश व्याख्याताश्च ते तात्पर्य्यटीकायां प्रयोजनं ज्ञानादिबुद्धयः तत्प्रवर्त्तिका जिज्ञासा तज्जनकः संशयः शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यं संशयव्युदासस्तर्कः अयमेवार्थोनिबन्धे निष्टङ्कितः जिज्ञासा विप्रतिपत्तिरिति कश्चित् एतेषाञ्च न न्यायावयवत्वं न्यायाघटकत्वात् न न्यायजन्यबोधानुकूलत्वेनैवावयवत्वं एकदेशस्यापि तत्त्वप्रसङ्गात् प्रयोजनेऽव्याप्तेश्च ॥ ३२ ॥

प्रतिज्ञां लक्षयति ।

साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

साधनीयस्यार्थस्य यो निर्देशः स प्रतिज्ञा साधनीयस्य वह्निमत्त्वादिना पर्व्वतादिस्तथा च पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधकशब्द इत्यर्थः निगमनवारणाय च साध्यांशे साध्यतावच्छेदकातिरिक्ताप्रकारकत्वं वाच्यं तदर्थस्य साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वं तेन प्रमेयवतः साध्यत्वे नासिद्धिः उदासीनवाक्यवारणाय च न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं तत्प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपं तत्तद्व्यक्तित्वरूपं चेत्यपि वदन्ति ॥ ३३ ॥

क्रमप्राप्तं हेतुं लक्षयति विभजते च सूत्राभ्यां ।

उदाहरणसाधर्म्म्यात्साध्यसाधनं हेतुः तथा वैधर्म्म्यात् ॥ ३४ ॥

अत्र साध्यसाधनं हेतुरिति सामान्यलक्षणं साध्यसाधनं साध्यसिद्ध्यनुकूलज्ञापकत्वबोधक इत्यर्थः तथा च साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोध

कोऽवयवइति फलितार्थः तस्य द्वैविध्यमाह उदाहरणसाध
र्म्यात्तथा वैधर्म्यादिति साधर्म्यमन्वयः वैधर्म्यं व्यतिरेकः
तादृशव्याप्तिरिति फलितार्थः उदाहरणसाधर्म्ये उदाहरण
बोध्यान्वयव्याप्तिस्ततोऽन्वयी हेतुर्ज्ञातव्यउदाहरणेति स्पष्टार्थं
तथाच ज्ञातान्वयव्याप्तिकहेतुबोधकोहेत्ववयवः अज्ञातव्यति
रेकव्याप्तिकहेतुबोधकोहेत्ववयवइति फलितार्थः एवमप्रती
तान्वयव्याप्तिकहेतुबोधकोहेत्ववयवोव्यतिरेकी हेतुः इत्यमेव
प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधकोहेत्ववयवोऽन्वयव्यतिरे
कीत्यपि सूचितमिति वदन्ति ॥ ३४ ॥

क्रमप्राप्तमुदाहरणं लक्षयति ।

साध्यसाधर्म्यात्तद्धर्मभावीदृष्टान्तउदाहरणं ॥ ३५ ॥

दृष्टान्तउदाहरणमिति लक्षणं दृष्टान्तवचनं दृष्टान्त
कथनयोग्यावयवइत्यर्थः तेन दृष्टान्तस्य सामयिकत्वेनासार्व
त्रिकत्वेऽपि न क्षतिः योग्यतावच्छेदकन्तु अवयवार्थानन्वितार्थ
कावयवत्वं तच्च द्विविधं अन्वयिव्यतिरेकिभेदात्तत्रान्वय्युदाह
रणं लक्षयति साध्यसाधर्म्यात्तद्धर्मभावीति अन्वय्युदाहरण
मिति शेषः परे तु सम्पूर्णसूत्रमन्वय्युदाहरणमेव सामान्य
लक्षणं तूक्तमित्याहुः साध्यसाधर्म्यात्साध्यसहचरितधर्मात्

 प्रकृतसाधनादित्यर्थः तं साध्यरूपं धर्मं भावयति तथाच साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोऽवयवः साध्यसाधनव्याप्त्युपदर्शकोदाहरणमिति यावत् ॥ २५ ॥

व्यतिरेक्युदाहरणं लक्षयति ।

**तद्विपर्य्ययाद्वा विपरीतं व्यतिरेक्युदाहरणं ॥२६॥**

तद्विपर्य्ययात् साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात्तथाच साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणं व्यतिरेक्युदाहरणं यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यन्नैवं तन्नैवं यथा घटइति वाकारः प्रयोगमपेक्ष्य तथा चान्वय्युदाहरणं व्यतिरेक्युदाहरणं वा प्रयोक्तव्यमित्यर्थः ॥ २६ ॥

क्रमप्राप्तमुपनयं लक्षयति ।

**उदाहरणापेक्षस्तथेत्युपसंहारोन तथेति वा साध्यस्योपनयः ॥२७॥**

साध्यस्य पक्षस्य उदाहरणापेक्ष उदाहरणानुसारी य उपसंहार उपन्यासः प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविशिष्टबोधजनकोपायावयवइत्यर्थः निगमनं हेतुविशिष्टत्वेन न पक्षबोधकं किन्तु पक्षवृत्तिहेतुबोधकमिति तद्व्युदासः अत्र चान्वयव्यतिरेकव्याप्त्योरन्यतरत्वादिनानुगमः

कार्य्यंउदाहरणोपदर्शितेति तु परिचायकमात्रमिति तु न १ अध्यायः
वाच्यं उदाहरणविपरीतव्याप्त्युपदर्शकोपनयवारकत्वात् वस्तु
तोऽवयवपदेनैव तद्व्युदासः सचोपनयो द्विविधोऽन्वयिव्यतिरेकि
भेदात् तथेति साध्यस्योपसंहारोऽन्वय्युपनयः न तथेति साध्य
स्योपसंहारोव्यतिरेक्युपनयः अत्र च तथाशब्दप्रयोगावश्यक
त्वेन तात्पर्य्यं किन्तु व्याप्तिविशिष्टवत्त्वबोधे तथाच वह्निव्याप्य
धूमवांश्चायमिति वा तथाचायमिति वोपन्यासः एवं व्यतिरेकि
ण्यपि वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायमिति
वा न तथेति वोपन्यासः ॥ ३७ ॥

निगमनं लक्षयति ।

हेत्वपदेशात्प्रतिज्ञायाः पुनर्व्वचनं निगमनं ॥ ३८ ॥

हेतोर्व्याप्तिविशिष्टपक्षधर्म्मस्य अपदेशः कथनं प्रतिज्ञायाः
प्रतिज्ञार्थस्य साध्यविशिष्टपक्षस्य वचनं निगमनं तथाच व्याप्तिवि
शिष्टपक्षधर्म्महेतुकथनपूर्व्वकसाध्यविशिष्टपक्षप्रदर्शकः व्याप्तपक्ष
धर्म्महेतुज्ञाप्यसाध्यविशिष्टबोधकस्तादृशसाध्यबोधकोवा न्याया
वयवोनिगमनमिति अस्य त्वन्वयिव्यतिरेकिभेदान्न भेदइत्या
शयः व्यतिरेकिणि तु तस्मान्न तथेत्येवाकारइत्यपरे ॥ ३८ ॥

समाप्तं न्यायस्वरूपप्रकरणं ॥ ६ ॥

अध्यायः

क्रमप्राप्तं तर्कं लक्षयति।

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ३९ ॥

तर्कइति लक्ष्यनिर्देशः कारणोपपत्तितऊहइति लक्षणं अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनं कारणं व्याप्यं तस्योपपत्तिरारोपस्तस्मात् ऊहआरोपः अर्थाद्व्यापकस्य तथाच व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्य्यारोपाद्योव्यापकस्याहार्य्यारोपः स तर्कः यथा निर्व्वह्नित्वारोपान्निर्धूमत्वारोपः निर्व्वह्निः स्यान्निर्धूमः स्यादित्यादि ह्रदोनिर्व्वह्निः स्यान्निर्धूमः स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति निर्व्वह्निः स्यात् अद्रव्यं स्यादित्यादिवारणाय व्याप्यस्येति तद्व्याप्यारोपाधीनस्तदारोपइत्यर्थलाभाय व्यापकेति नचानुमानादितोऽर्थसिद्धेस्तर्कोव्यर्थइति वाच्यं अप्रयोजकत्वादिशङ्काकलङ्कितेन हेतुनार्थस्य साधयितुमशक्यत्वात्तदेतदुक्तमविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति तत्त्वनिर्णयार्थमित्यर्थः यत्र नाप्रयोजकत्वाद्याशङ्का तत्र नापेक्षणेवेति भावः परे तु ऊहइत्येव लक्षणं ऊहत्वञ्च मानसत्वव्याप्योजातिविशेषस्तर्कयामीत्यनुभवसिद्धः तर्कः किं स्वतएव निर्णायकः परम्परयावेत्यत्राह कारणेति कारणस्य व्याप्तिज्ञानादेरुपपादनद्वारेत्यर्थः तथा च धूमोयदि वह्निव्यभिचारी स्यात् वह्निजन्योन

स्यादित्यनेन व्यभिचारशङ्कानिरासे निरङ्कुशेन व्याप्तिज्ञाने १ अध्यायः
नानुमितिरिति परम्परयैवास्योपयोगइत्याहुः स चायं
पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधि
तार्थप्रसङ्गभेदात् स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः स
च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा यथा यद्ययं घट एतद्घट
जन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात् यद्ययं
घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्योन स्यात् यद्ययं घट एत
द्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् एतद्घटभिन्नः
स्यादिति वा सर्व्वत्राप्याद्यं तदपेक्षापेक्षित्वनिबन्धनोऽनिष्टप्र
सङ्गोऽन्योन्याश्रयः सोऽपि पूर्व्ववत्त्रेधा तदपेक्षापेक्ष्यपेक्षित्वनिब
न्धनोऽनिष्टप्रसङ्गश्चक्रकं चतुःकक्षादावपि स्वस्य स्वापेक्षापेक्ष्य
पेक्षित्वसत्त्वान्नाधिक्यं अस्यापि पूर्व्ववत्त्रैविध्यं अव्यवस्थितपर
म्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था यथा यदि घटत्वं घट
जन्यत्वव्याप्यं स्यात्कपालसमवेतत्वव्याप्यं न स्यात् तदन्यबाधि
तार्थप्रसङ्गस्तु धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्योन स्यादि
त्यादिः प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवा
दिकन्तु प्रसङ्गानात्मकत्वात् न तर्कः किन्तु प्रमाणसहकारित्व
रूपसाधर्म्यात्तथा व्यवहारइति संक्षेपः ॥ ३८ ॥

क्रमप्राप्तं निर्णयं लक्षयति।

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४० ॥**

विमृश्य सन्दिह्य पक्षप्रतिपक्षाभ्यां साधनोपालम्भाभ्यां उपालम्भः परपक्षदूषणं अर्थस्यावधारणं तदभावाप्रकारकं तत्प्रकारकं ज्ञानं यद्यप्येतावदेव निर्णयसामान्यलक्षणं तथापि विमृश्येत्यादिकं जल्पवितण्डास्थलीयनिर्णयमधिकृत्य तदुक्तं भाष्ये शास्त्रे वादे च विमर्शवर्जमिति एवं प्रत्यक्षतः शब्दाच्च निर्णये न विमर्शपक्षप्रतिपक्षापेक्षेति ॥ ४० ॥

समाप्तं न्यायोत्तराङ्गप्रकरणं ॥ ७ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ प्रथमाध्यायस्य प्रथममाह्निकं ॥ १ ॥

प्रथमाह्निकेन सपरिकरे न्याये लक्षिते वादादिलक्षणाय द्वितीयाह्निकारम्भः छलपरीक्षा च प्रसङ्गाद्भविष्यति तथाच च्छलपरीक्षासहितवादादिलक्षणं द्वितीयाह्निकार्थः तत्र च त्वारि प्रकरणानि आदौ कथाप्रकरणं ततो हेत्वाभासप्रकरणं [illegible]प्रकरणं दोषलक्षणप्रकरणं चेति अत्र कथासामान्य [illegible] विशेषावादादिस्तथाच त्रिभिः सूत्रैरेकं कथाप्रकरणं [illegible]सूत्रस्य प्रकरणलाभाभावादसङ्गतिः स्यादित्याह्ये नोक्तं भाष्यकृता तिस्रः खलु कथाभवन्ति वादो जल्पो वितण्डा

चेति तत्र तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्योन्यायानुगतवच १ अध्यायः
नसन्दर्भः कथा लौकिकविवादवारणाय न्यायेत्यादि यथैकेन
न्यायः प्रयुक्तोऽपरेण तु मतपरिग्रहोऽपि न कृतस्तद्वारणाय
आद्यं विशेषणमिति कथाधिकारिणस्तु तत्त्वनिर्णयविजयान्यत
राभिलाषिणः सर्व्वजनसिद्धानुभवानपलापिनः श्रवणादिप
टवः अकलहकारिणः कथोपयिकव्यापारसमर्था इति ॥

तत्र वादं लक्षयति ।

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नपक्षप्रतिपक्षपरिग्रहो वादः ॥ ४१ ॥

अत्र च वाद इति लक्ष्यनिर्द्देशः पक्षप्रतिपक्षौ विप्रतिपत्ति
कोटी तयोः परिग्रहस्तत्साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनस
न्दर्भः तावन्मात्रञ्च कथान्तरसाधारणमतआह प्रमाणे
त्यादि प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां साधनोपालम्भौ
यत्र स तथा उभयत्रापि प्रमाणादिसद्भावकोटिद्वयस्यापि
सिद्धिः स्यादतस्तद्रूपेण ज्ञाताभ्यामिति ज्ञानमनाहार्य्यं विव
क्षितं उपालम्भोदूषणं जल्पादौ तु प्रमाणाभासत्वादिना ज्ञाता
भ्यामपि साधनोपालम्भौ भवत इति तद्वारणं तथा इतरथा
तु तद्धेतोरेव दुष्टत्वं इत्यञ्च प्रमाणाभासत्वप्रकारकज्ञानवि
षयकरणकसाधनोपालम्भयोग्यान्यत्वे सतीत्यर्थस्तेन तादृश

१ अध्यायः जल्पविशेषे नातिव्याप्तिः तत्र च निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादिविशेषणद्वयं अन्ये तु तदपि लक्षणघटकमेव तदर्थश्च तावन्मात्रनिग्रहस्थानयोग्यत्वं तावदतिरिक्तनिग्रहस्थानोपन्यासायोग्यत्वं वा निग्रहस्थानं प्रतिज्ञाहान्यादीनामेकं धृत्वा तदुपन्यासायोग्यत्वमिति निष्कर्षः तेनोक्तजल्पविशेषवारणमित्याहुः सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तोद्भावनं पञ्चावयवोपपन्न इत्यनेन न्यूनाधिकोद्भावने अवयवाभासस्य दृष्टान्तासिद्ध्यादेश्चोद्भावनं प्रमाणेत्यनेन च प्रमाणाभासत्वेन हेत्वाभासानां तर्काभासस्य चोपन्यासो नियम्यते तथाचात्र हेत्वाभासन्यूनाधिकापसिद्धान्तरूपनिग्रहस्थानचतुष्टयोद्भावनमिति वदन्ति वस्तुतस्तु वादस्य वीतरागकथात्वेन तत्त्वनिर्णयस्योद्देश्यतया पुरुषदोषस्याविज्ञातार्थादेरिव न्यूनाधिकयोरपि नोद्भावनमुचितमतएव पञ्चावयवावश्यकत्वमपि भाष्यकारेणानुमेने हेत्वाभासाद्युद्भावनेनापि च तदैव कथाविच्छेदो यदि हेत्वन्तरेणापि साधयितुं न शक्यते इतरथा तु तद्धेतोरेव दुष्टत्वं इत्यत्र पञ्चावयवोपपन्न इति प्रायिकत्वाभिप्रायेणेति तत्त्वं वादाधिकारिणस्तु तत्त्वबुभुत्सवः प्रकृतोक्तिकाः अविप्रलम्भकाः यथाकालस्फूर्त्तिका अनाक्षेपका युक्तिसिद्धप्रत्येतारः अनुविधेयश्चेयःसभ्यपुरुषवती जनतासभा अनुविधेयो राजादिः श्रेयान् मध्यस्थः सा च वादे नावश्यकी वीतरागकथात्वादिति ॥ ४१ ॥

जल्पं लक्षयति । 

यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनो पालम्भोजल्पः ॥ ४२ ॥

यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः मध्यपदलोपी समासः तथाच प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः अन्यथा जल्पस्य वादविशेषत्वा पत्तिः प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां न तु ज्ञानेऽनाहार्य्यत्वं विवक्षितं आरोपितप्रमाणाभासेऽपि जल्पनिर्वाहात् यद्यपि छलादिभिरुपालंभ एव न तु साधनं तथापि साधनस्य पर कीयानुमानस्योपालम्भाय चेत्यर्थान्न दोषः परपक्षदूषणे सति स्वपक्षसिद्धिरित्यतः साधने तदुपयोग इत्यन्ये उभयपक्षस्थाप नावत्त्वेन च विशेषणीयमतो वितण्डायान्नातिव्याप्तिः सप्रतिपक्ष स्थापनाहीन इत्युत्तरसूत्रात्प्रकृते उभयपक्षस्थापनावत्त्वलाभः स्थापनावत्त्वादेव पञ्चावयवनियमोऽपि लभ्यत इति वदन्ति अत्र च छलादिभिः सर्व्वैरुपालम्भो न विशेषणाय व्याप्तिरपि तु तद्योग्यतयैव योग्यतावच्छेदकं वादभिन्नकथात्वमेव तच्च चोक्तवादत्वावच्छिन्नभेदस्तत्तद्वादभेदो वा विशेषणमिति छले त्यादिना विजिगीषुकथात्वं बोध्यते विजिगीषुर्हि छलादिकं करोति तथा चोभयपक्षस्थापनावती विजिगीषुकथा जल्प इत्यर्थः इत्यपि वदन्ति अत्र चायं क्रमः वादिना स्वपक्षसाधनं प्रयुज्य

१ अध्यायः नायं हेत्वाभासस्तल्लक्षणायोगादिति सामान्यतोनायमसिद्ध इत्यादि विशेषतः प्रतिवादिना स्वस्याज्ञानादिनिरासाय परोक्तस्य यथासम्भवादेव लाभे उच्यमानग्राह्याणामप्राप्तकालापार्थकनिरर्थकापार्थकानामलाभे उक्तग्राह्याणां प्रतिज्ञान्तरप्रतिज्ञासन्न्यासहेत्वन्तराविज्ञातार्थविक्षेपमतानुज्ञान्यूनाधिकपुनरुक्तनिरनुयोज्यानुयोज्यापसिद्धान्तानामलाभे पर्य्यनुयोज्योपेक्षणस्य मध्यस्थोद्भाव्यत्वादेवानुपस्थान्यासार्हतया यथासम्भवहेत्वाभासेन परोक्तं दूषयित्वा स्वपक्षउपन्यसनीयः ततो वादिना तृतीयकक्षाश्रितेन परोक्तमनूद्य स्वपक्षदूषणमुद्धृत्यानुक्तिया ग्रोच्यमानग्राह्यहेत्वाभासातिरिक्तोक्तग्राह्याणामलाभे हेत्वाभासेन यथासम्भवं प्रतिपक्षवादिनः स्थापना दूषणीया अन्यथा क्रमविपर्य्यासेऽप्राप्तकालं अनवसरे दूषणोद्भावने च निरनुयोज्यानुयोगः यथा त्वद्व्यभि चेत्प्रतिज्ञाहानिर्विशेषयसि चेद्धेत्वन्तरमित्यादिप्रतिज्ञाहेत्वादिवद्धेत्वाभासानामुक्तग्राह्यत्वाविशेषेऽपि अर्थदोषत्वेनाप्रधानत्वाच्चरममनुसन्धानमिति ॥ ४२ ॥

वितण्डां क्रमप्राप्तां लक्षयति ।

सप्रतिपक्षस्थापनाहीनोवितण्डा ॥ ४३ ॥

स्थापि तच्छब्देन जल्पोन परामृष्टुं शक्यते जल्पस्य स्थापना

द्वयवतः प्रतिपक्षस्थापनाहीनत्वस्य विरुद्धत्वात् तथापि स्थाप १ अध्यायः
नाद्वयवत्त्वं विहाय जल्पैकदेशः परामृश्यते प्रतिपक्षो द्वितीय
पक्षस्तथा च प्रतिपक्षस्थापनाहीना विजिगीषुकथा वितण्डेति
न च स्वस्य स्थापनीयाभावात् कथमियं कथा प्रवर्त्ततामिति
वाच्यं परपक्षखण्डनेन जयस्यैवोद्देश्यत्वात् परे तु यत्परपक्ष
खण्डनेनैव स्वपक्षसिद्धेरर्थादेव सिद्धेस्तत्साधनाभावेऽपि न प्रवृ
त्त्यनुपपत्तिरिति वदन्ति ॥ ४३ ॥

समाप्तं कथाप्रकरणं ॥ ८ ॥

क्रमप्राप्तान् हेत्वाभासाल्लक्षयति विभजते च ।

सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः ॥ ४४ ॥

न चात्र लक्षणं न प्रतीयत इति वाच्यं हेत्वाभासशब्दस्य हेतुवदाभासमानार्थकत्वेनैव तत्सूचनात् सूचनाद्धि सूत्रं तथाहि पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वोपपन्नो हेतुर्गमकः तद्वदाभासत इत्यत्र चार्थस्तद्भिन्नत्वे सति तद्धर्मवत्त्वं तथा च पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमान इति फलितार्थः तत्र च लक्षणं सत्यं तस्यैव दूषकतायामुपयोगात् न च असाधकतायां पक्षसत्त्वाद्येकैकाभावस्यैव गमकत्वसम्भवेऽधिकवैयर्थ्यं एतेन पञ्चान्यत्वं लक्षणमित्यपि प्रयुक्तमिति वाच्यं

१ अध्याय: पक्षान्यतमत्वावच्छिन्नाभावस्य पक्षसत्त्वाभावाद्यघटितत्वेन वैयर्थ्याभावात् वस्तुतस्तु पृथिवी इतरेभ्योभिद्यते स्पर्शवत्त्वात् प्रमेयमाकाशादित्यादौ सपक्षाद्यप्रसिद्धेर्नैतस्य लक्षणत्वेनात्यर्थं परन्तु विपक्षासत्त्वसपक्षसत्त्वाभ्यामव्यभिचरितसामानाधिकरण्यं पक्षसत्त्वसहितस्य चैतस्य विरोधित्वं त्रिभिर्लभ्यं तेन व्याप्तिविशिष्टपक्षधर्मताविरोधित्वं चरमयोस्त्वनुमितिविरोधित्वयानवच्छिन्नत्वार्थकयोरभावादनुमितिविरोधित्वं तेनानुमितितत्कारणान्यतरविरोधित्वं पर्य्यवस्यति ॥ ४४ ॥

सव्यभिचारं लक्षयति ।

अनैकान्तिकः सव्यभिचारः ॥ ४५ ॥

एकस्य साध्यस्य तदभावस्य वा योऽन्तः सहचारः अव्यभिचरितसहचारः अव्यभिचरितसहचारस्यान्तः सहचार इत्याशयः स चात्र व्याप्तिग्राहकस्तथा चैकमात्रव्याप्तिग्राहकसहचारस्यैकान्तिकस्तदन्यो नैकान्तिकः स च साधारणोऽसाधारणोऽनुपसंहारी चेति त्रिविधः साधारणः साध्यवदन्यवृत्तिः यथा शब्दो नित्यः निःस्पर्शत्वात् न च विरुद्धसङ्कीर्णदोषः उपाधेय सङ्करेऽप्युपाधेरसङ्करात् असाधारणः सपक्षविपक्षव्यावृत्तः साध्यवत्त्वनिश्चयविषयः यथा शब्दो नित्यः शब्दत्वादित्यादौ अनुपसंहारी च केवलान्वयिधर्मावच्छिन्नपक्षकः यथा

सर्वं नित्यं मेयत्वादित्यादि अत्र च साध्यसन्देहाद्व्याप्तिग्रहो न १ अयमनः भवतीत्याशयः नव्यास्तु असाधारणः साध्यवदवृत्तिः एतस्य साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धो दूषकताबीजं अनुपसंहारी च केवलान्वयिसाध्यकस्तस्य चात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपस्य ज्ञानाद्व्यतिरेकव्याप्तिग्रहप्रतिबन्धो दूषकताबीजं इत्याहुः ॥ ४५ ॥

क्रमप्राप्तं विरुद्धं लक्षयति ।

सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ४६ ॥

अत्र च सिद्धान्तसाध्यं प्रतिज्ञार्था हि पक्षस्य सिद्धान्तं साध्यमभिधीयते तथा च साध्यमभ्युपेत्य उद्दिश्य प्रयुक्तस्तद्विरोधी साध्याभावव्याप्तइति फलितार्थः यथा वह्निमान् ह्रदत्वादिति एतस्य साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धो दूषकताबीजं न च सत्प्रतिपक्षाद्विशेषः तत्र हेत्वन्तरं साध्याभावसाधकं इह तु हेतुरेव साध्याभावसाधकः साध्यसाधकत्वेन त्वयोपन्यस्त इत्यभक्तिविशेषोन्नायकत्वेन विशेषात् ॥ ४६ ॥

क्रमप्राप्तं प्रकरणसमं लक्षयति ।

यस्मात्प्रकरणचिन्तासनिर्णयार्थमपदिष्टः प्रकरणसमः ॥ ४७ ॥

१ अध्यायः सद्धेतुः स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थमपदिष्टः प्रयुक्तः प्रकरणसम उच्यते स क इत्याकाङ्क्षायामाह यस्मात्प्रकरणं पक्षप्रतिपक्षाविति भाष्यं साध्यतदभाववन्ताविति तदर्थे स्याच्च निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात्किन्तु धर्म्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्त्तयति सप्रकरणसमः यद्वा प्रकृष्टं करणं लिङ्गं परामर्शो वा कोहेतुरनयोः साधकः एतयोः कः परामर्शः प्रमेति वा यत्र जिज्ञासाभवतीत्यर्थः यस्मादित्यादितु वस्तुस्थितिमात्रं लक्षणन्तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वं स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा विरोधिपरामर्शस्य च हेतुनिष्ठत्वमेकज्ञानविषयत्वमस्वन्धेन अन्यथा हेतोर्दुष्टत्वं न स्यात् अयञ्च दशाविशेषे दोष इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयं ॥ ४७ ॥

क्रमप्राप्तं साध्यसमं लक्षयति ।

## साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ४८ ॥

साध्येन वह्न्यादिनाऽविशिष्टः कुत इत्यत आह साध्यत्वादिति साधनीयत्वादित्यर्थः यथाहि साध्यं साधनीयं तथा हेतुरपिचेत्साध्यसम इत्युच्यते अतएवचासिद्ध इति व्यवह्रियते

अयमाश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धिभेदात्त्रिविधः । १ अध्यायः
आश्रयासिद्धिश्च पक्षे पक्षतावच्छेदकाभावः यथा काञ्चन
मयः पर्व्वतोवह्निमानित्यादौ स्वरूपासिद्धिः पक्षे हेतुतावच्छे
दकावच्छिन्नस्याभावः यथा ह्रदोद्रव्यं धूमादित्यादौ व्याप्यत्वा
सिद्धिश्चाव्यभिचरित सामानाधिकरण्यस्याभावः न च स्वरूपा
सिद्धेरेव सूत्राल्लक्ष्यत्वप्रतीतेर्नोभयोर्लक्ष्यत्वमिति वाच्यं हेतु
रितिपदं ह्यत्र पूरणीयं हेतुपदञ्च गमकहेतोर्व्याप्तिवि
शिष्टपक्षधर्म्मस्य वाचकं व्याप्तिविशिष्टपक्षधर्म्मइत्येव वा पूर्य्यतां
तथाच तस्य किञ्चिदंशसाध्यत्वेनैव साध्यसमत्वं अतएव साध्ये
साध्यतावच्छेदकाभावः साधने साधनतावच्छेदकाभावश्चव्याप्य
त्वासिद्धिः यथा पक्षतावच्छेदकाभावपक्षतावच्छेदकवद्भेदादे
रन्यतमत्वेनाश्रयासिद्धित्वं यथाच पक्षे हेत्वभावहेतुमद्भेदा
देरन्यतमत्वेन स्वरूपासिद्धित्वं तथा साध्यतावच्छेदकाभावादे
रन्यतमत्वेन व्याप्यत्वासिद्धित्वं त्रितयान्यतमत्वं चासिद्धि
सामान्य लक्षणं नीलधूमत्वादेरपि व्याप्यत्वासिद्धावन्तर्भावं
वदन्ति तेषामयमाशयः व्याप्तिर्हि साध्यसम्बन्धितावच्छेदक
रूपा गुरुधर्म्मश्च साध्यसम्बन्धितानवच्छेदकोऽतोनीलधूमत्वादेः
साध्यसम्बन्धितानवच्छेदकत्वान्न व्याप्तिस्वरूपत्वं तथाच साध्य
तावच्छेदकाभावादिरिव साधनतावच्छेदकेव्याप्यतानवच्छेदकत्व
मपि भवति व्याप्यत्वासिद्धिरिति ॥ ४८ ॥

१ अध्यायः

क्रमप्राप्तमतीतकालं लक्षयति ।

कालात्ययापदिष्टः कालातीतः ॥ ४९ ॥

अतीतकालस्य समानार्थकत्वात् कालातीतशब्देनोक्तं कालस्य साधनकालस्यात्यये ऽभावेऽपदिष्टः प्रयुक्तो हेतुः एतेन साध्याभावप्रमालक्षणार्थइति सूचितं साध्याभावनिर्णये साधनं प्रयुज्यमानं बाधितसाध्यकइति गीयते यथा वह्निरनुष्णः कृतकत्वादित्यादौ न च बाधे आवश्यकस्य व्यभिचारस्वरूपासिद्ध्यन्यतरस्यैव दोषत्वमुचितमिति वाच्यं तदप्रतिसन्धानेन बाधस्य दोषत्वावश्यकत्वात् उपधेयसङ्करेप्युपाधेरसङ्करात् उत्पत्तिकालावच्छिन्नो घटो गन्धवान् शिखरावच्छिन्नः पर्व्वतो वह्निमानित्यादावसङ्कराच्च साध्याभाववत्त्वज्ञानावच्छेदकावच्छिन्नकत्वस्य तत्र सत्त्वात्परं तु घटः सकर्तृकः कार्य्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रकर्तृकत्वं भासत इत्युच्यते तत्र तदभावोऽसङ्कीर्णोदाहरणमिति वदन्ति ॥ ४९ ॥

समाप्तं हेत्वाभासप्रकरणं ॥ ८ ॥

क्रमप्राप्तं छलं लक्षयति ।

वचनविघातोऽर्थविकल्पोपपत्त्या च्छलं ॥ ५० ॥

अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पो अर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य

विघातो दूषणं तच्छलमित्यर्थः वक्तृतात्पर्य्याविषयार्थकल्पने १ अध्यायः
न दूषणाभिधानमिति फलितं तात्पर्य्याविषयत्वं विशेष्ये विशेषणे
संसर्गे वा यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नव
संख्यापरत्वकल्पनया ऽसिद्धाभिधानं प्रमेयं धर्म्मत्वादित्यत्र
पुण्यत्वार्थकल्पनया भागासिद्धाभिधानं वह्निमान् धूमादित्यत्र
धूमावयवे व्यभिचाराभिधानं ॥ ५० ॥

लक्षितं छलं विभजते।

तत्त्रिविधं वाक्छलं सामान्यछलमुपचारछलञ्च
॥ ५१ ॥

तत्र वाक्छलं लक्षयति।

अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तर-कल्पना वाक्छलं ॥ ५२ ॥

यत्र शक्यार्थद्वये सम्भवति एकार्थनिर्णयैकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानं तद्वाक्छलं लक्षणन्तु शक्त्या एकार्थशाब्दबोधतात्पर्य्यकशब्दस्य शक्त्यार्थान्तरतात्पर्य्यकत्वकल्पनया दूषणाभिधानं यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसंख्याकाः कम्बला इति एवं गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गं श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वता न धावतीत्यभिधानमित्यादिकमूह्यं ॥ ५२ ॥

सामान्यछलं लक्षयति।

सम्भवतोऽर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलं ॥ ५३ ॥

सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्य अतिसामान्ययोगादसम्भवदर्थकत्वकल्पनया दूषणाभिधानं सामान्यच्छलं। यथा ब्राह्मणोयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पदं साधयतीति कल्पयित्वा परोवदति कुतो ब्राह्मणत्वेन विद्याचरणसम्पदा व्यभिचारात् ॥ ५३ ॥

उपचारछलं लक्षयति।

धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलं ॥ ५४ ॥

धर्मशब्दस्यार्थेन सम्बन्धस्तस्य विकल्पो द्विविधः कल्पः शक्तिलक्षणान्यतररूपस्तथाच शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्यायः प्रतिषेधः स उपचारच्छलं यथा मञ्चाः क्रोशन्ति नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चा एवं घटस्य कथं नीलरूपाभेदः एवं अहं नित्य इति शक्त्या प्रयुक्ते अमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोप्युपचारच्छलं वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वं। न च सिद्धलाक्षणिके प्रयोगादादिनएपराधः स्यादिति वाच्यं

तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोनपरा १ अध्याय: धात् अन्यथा पर्व्वतोवह्निमानित्युक्ते पर्व्वतोयं कथमवह्निमा नित्यादिदूषणेनानुमानाद्युच्छेदः स्यात् ॥ ५४ ॥

प्रसङ्गाच्छलं पूर्व्वपक्षयति ।

वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ ५५ ॥

शब्दस्यार्थान्तरकल्पनाऽविशेषाद्वाक्छलमेवोपचारच्छलं स्यादिति छलस्य द्वित्वमेव न तु त्रित्वमिति शङ्कार्थः ॥ ५५ ॥

समाधत्ते ।

नतदर्थान्तरभावात् ॥ ५६ ॥

उपचारच्छलस्य वाक्छलाभेदोन तयोरर्थान्तरभावात् भिन्नत्वात् भिन्नतया प्रमाणसिद्धत्वादिति फलितार्थः पूर्व्वोक्तभेदकधर्म्मेण भेदसम्भवेपि यत्किञ्चिद्धर्म्मेणाभेदे सामान्यधर्म्मेणाभेदस्य सर्व्वत्र सम्भवाद्विभागः कुत्रापि नस्यादिति ॥ ५६ ॥

विपक्षे बाधकमभिप्रेत्याह ।

अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ ५७ ॥

यत्किञ्चिद्धर्म्मादविशेषे किञ्चित्साधर्म्याच्छलत्वादिरूपाच्छलस्यैक्यं स्यान्न तु त्वदभिमतं द्वित्वमपीति भावः ॥ ५७ ॥

समाप्तं च्छलप्रकरणं ॥ १० ॥

१ अध्यायः

क्रमप्राप्तां जातिं लक्षयति ।

## साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ ५८ ॥

साधर्म्यवैधर्म्याभ्यामिति सावधारणानिर्देशस्तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः यद्यप्युभाभ्यां प्रत्यवस्थानस्य प्रत्येकप्रत्यवस्थानेऽव्याप्तिरेकप्रत्यवस्थानस्य लक्षणत्वे परप्रत्यवस्थानेऽव्याप्तिर्नवान्यतरप्रत्यवस्थानं नियतं सर्वत्र जातावभावात्तथापि व्याप्तिनिरपेक्षतया दूषणाभिधानमित्येव वाच्यं तेन च मन्दं॰ण दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितं तथा च छलादिभिन्नं दूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिरिति सूचितं साधर्म्यसमादिचतुर्विंशत्यन्यान्यत्वं तदर्थं इत्यपि वदन्ति ॥ ५८ ॥

क्रमप्राप्तं निग्रहस्थानं लक्षयति ।

## विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानं ॥ ५९ ॥

निग्रहस्य खलीकारस्य स्थानं ज्ञापकं निग्रहस्थानं तच्च विप्रतिपत्तिरप्रतिपत्तिश्च विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिरप्रतिपत्तिः प्रकृताज्ञानं यद्यप्येतदन्यतरत् परनिष्ठं नोद्भावयितुमर्हं प्रतिज्ञाहान्यादिनिग्रहस्थानानुपपत्तिश्च तथापि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वं तदर्थः उद्देश्यानुगुणसम्यक् ज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्याद्यन्यतमत्वं वा लक्षणमित्यपि वदन्ति ॥ ५९ ॥

जातिनिग्रहस्थानयोर्विभागो नास्तीति भ्रमो माभूदित्यत १ अध्यायः आह ।

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वं ॥ ६० ॥

तद्विकल्पात्साधर्म्यादिना प्रत्यवस्थानस्य विप्रतिपत्त्याद्युन्नायकव्यापारस्य च विकल्पाद्भेदान्नानाप्रकारत्वादिति यावत् इत्यस्य तयोर्बहुत्वेऽपि प्रमाणादिपरीक्षाविषयकशिष्यजिज्ञासया प्रतिबन्धान्नेदानीं तद्विभागः क्रियत इति भावः ॥ ६० ॥

समाप्तं पुरुषाशक्ति लिङ्गदोषसामान्यलक्षणप्रकरणं ॥ ११ ॥

प्रथमाध्यायस्य द्वितीयमाह्निकं ॥ २ ॥

इतिविश्वनाथभट्टाचार्य्यकृतन्यायसूत्रवृत्तौ प्रथमाध्यायवृत्तिः समाप्ता ॥ १ ॥

—

२ अध्या : प्रमाणैःप्रथितैर्दोर्भिर्विवादेषु परीक्षितैः । हरिं द्वितीय मध्यायं भाषमानमहं भजे ॥ १ ॥

अथ प्रमाणादिषु लक्षितेषु परीक्षणीयेषु संशयं विना परीक्षाया असम्भवादादौ संशयएव परिक्षणीयः शिष्यजिज्ञासानुसारात्सूचीकटाहन्यायाच्चाऽतः संशयपरीक्षायाः प्रमाणादिपरीक्षोपयोगित्वात् प्रमाणपरीक्षैवाध्यायार्थइति वदन्ति । वस्तुतस्तु छलस्यपरीक्षितत्वात् तृतीयचतुर्थयोः प्रमेयस्य पञ्चमेजातेःपरीक्षिष्यमाणत्वात्तदतिरिक्तयावत्पदार्थपरीक्षैवाध्यायार्थः ॥ प्रयोजनादिपरीक्षाया अप्यत्रैवातिदेशेन करिष्यमाणत्वात् तत्र विभागसापेक्षप्रमाणपरीक्षातिरिक्तयावत्पदार्थपरीक्षाप्रथमाह्निकार्थः तत्र च नव प्रकरणानि तत्रादौ संशयपरीक्षाप्रकरणं अन्यानि यथायथं वक्ष्यन्ते तत्र संशयपरीक्षणाय पूर्वपक्षसूत्रं ।

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥ १ ॥**

अत्र सूत्रकृता संशयस्याऽदर्शनात्संशयपरीक्षायां संशयोत्क्रमनवस्थाभयादित्याशयं सूत्रकृतोवर्णयन्ति तदसत् न

सूत्र संशयस्वरूपं परीक्ष्यते। येनानवस्था स्यात् अपितु लक्षण 
सूत्रोक्तं संशयकारणं तथाच संशयः समानधर्मदर्शनादि
जन्योन वेति संशयः सम्भवत्येव। परन्तु सूत्रकृतोनिर्णयसत्त्वात्
पूर्व्वपक्षनिरासमात्रस्यापेक्षणात् संशयोन दर्शित एवमेव प्रमा
णादिपरीक्षायामपि तदेवाभिहितं भाष्ये शास्त्रेवादे च विमर्ष
वर्जमिति तत्त्वं समानादिधर्मदर्शनान्न संशयः प्रत्येकं व्यभिचा
रात् अन्यतरत्वेनानुगतोक्ततद्दर्शनादपि न संशयः न हिस्थाणु
धर्म्मसमानधर्म्मायं पुरुषधर्म्मसमानधर्म्मायमिति वा जानन्
स्थाणुर्नवेति सन्दिग्धे समानत्वस्य भेदगर्भत्वाद्भिन्नधर्म्मत्वेन
ज्ञाते तद्भेदग्रहस्यैव सम्भवात् यद्वा समानानेकधर्मोपपत्ते
रिति लक्षणसूत्रे उपपत्तिपदं स्वरूपपरमिति भ्रान्तस्येयं
शङ्का तथाचायमर्थः न संशयः समानधर्मादितः स्वरूपसत
इति शेषः यद्वः समानधर्मादेरध्यवसायादन्यतरत्वेनानुगती
कृततदध्यवसायाद्वा संशयः अन्यथा संशयस्य सार्व्वत्रिकत्वा
पत्तेः॥ १॥

विप्रतिपत्त्यादिजन्यसंशयक्षयं प्रतिक्षिपति।

विप्रतिपत्त्यव्यवस्थायाश्च ॥ २॥

न संशय इत्यनुवर्त्तते विप्रतिपत्तेरुपलब्ध्यव्यवस्थायाअनु
पलब्ध्यव्यवस्थायाश्च न संशयजनकत्वं प्रत्येकं व्यभिचारादि

 त्वर्थः यद्वा स्वरूपसद्विप्रतिपत्त्यादितो न संशयः किन्तु तदध्यवसायादित्यर्थः ॥ २ ॥

विप्रतिपत्तिजसंशयमात्रप्रतिक्षेपाय सूत्रान्तरं।

विप्रतिपत्तौ च संप्रतिपत्तेः ॥ ३ ॥

विप्रतिपत्तौ न संशयहेतुत्वं संप्रतिपत्तेः निश्चयात् वादिनोर्मध्यस्थस्य च निश्चयसत्त्वात् सति च निश्चये संशयायोगादिति भावः ॥ ३ ॥

उपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयद्वय निरासाय सूत्रं।

अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥

उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च संशयजनकत्वं द्वा स्यात् यदि स्वस्मिन्नप्यव्यवस्थितत्वं स्यात् नत्वेवं तथाच स्वात्मनि व्यवस्थितायास्तस्याः कथमन्यत्राव्यवस्थात्वमित्यर्थः ॥ ४ ॥

ननु व्यवस्थाप्रामाण्यसंशयस्तस्य च नत्वसंशयरूपत्वं संशयस्य विषयविशेषघटितत्वात् तस्य चान्यसंशयजनकत्वं न विरुद्धं। अतो दूषणान्तरमाह।

तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥

तथा तथासति अव्यवस्थाया हेतुत्वे सति तथाशब्दोयं

न सूत्रान्तर्गतोऽपितु भाष्यस्य इत्यन्ये अत्यन्तसंशयः संशयान २ सर्वथाऽनुच्छेदः स्यात् तद्धर्मस्य तज्जनकस्य ज्ञानत्वादिसाधारणधर्म दर्शनस्य सातत्योपपत्तेः सर्व्वदा सम्भवादथ ज्ञानत्वादिसाधारणधर्मदर्शनेपि कारणान्तरविलम्बान्न सर्व्वत्र प्रामाण्यसंशय इति यदि तदा तस्यैव विषयसंशयेपि हेतुत्वमस्त्विति किं प्रामाण्यसंशयस्य साधारणधर्मदर्शनादेर्वा संशयहेतुत्वेनेति भावः ॥ ५ ॥

सिद्धान्तमाह।

**यथोक्ताध्यवसायादेव तद्विशेषापेक्षात्संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥**

यथोक्ताध्यवसायात् साधारणादिधर्मदर्शनात् तस्य पुरुषत्वादेर्यो विशेष इतरव्यावर्त्तको धर्मस्तस्यापगत ईचईचणं ततः विशेषादर्शनादित्यर्थस्तथाच विशेषादर्शनसहितसाधारणधर्मदर्शनादितः संशयेस्वीकृते न कारणाभावादसंशयो नवायत्किञ्चित्कारणसत्त्वादत्यन्तसंशय इत्यर्थः साधारणधर्म दर्शनादेस्तु संशयविशेषे जनकत्वात् संशयत्वावच्छिन्नं प्रति व्यभिचारेपि न क्षतिः विप्रतिपत्तौ च वादिवाक्याभ्यां मध्यस्थस्यैव संशयोपगमात् यच्चोक्तं समानधर्म्मदर्शनात् कथं संशय समानत्वस्य भेदगर्भत्वादिति तदपिन नहि समानधर्म्मत्वेन

२ अध्यायः तज्ज्ञानं हेतुरपि तु उभयसहचरितधर्म्मवत्त्वज्ञानं तथेत्युक्तदोषाभावात् ॥ ६ ॥

सम्प्रति संशयपरीक्षयैव परेषां पदार्थानां परीक्षामतिदिशन्नाह ।

यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥

एवमुक्तरीत्या उत्तरोत्तरेषु प्रयोगेषु प्रसङ्गः प्रकृष्टः सङ्गः परीक्षायाः सम्बन्धोबोध्यव्यस्तत्किं प्रयोजनमपि परीक्षणीयं नेत्याह यत्र संशयइति यदि तल्लक्षणार्थसंशयस्तदा तदपि परीक्षणीयं अथवा उत्तरोत्तरं उक्तिप्रत्युक्तिरूपं तत्प्रसङ्गः तत्र या परीक्षा संशयितेर्थे कर्त्तव्येत्यर्थः ॥ ७ ॥

समाप्तं संशयपरीक्षा प्रकरणं ॥ १२ ॥

इदानीमवसरतः प्रमाणसामान्यपरीक्षणाय पूर्व्वपक्षयति ।

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥ ८ ॥

कालत्रयेपि प्रमाणात्प्रमायाः सिद्धेर्व्वक्तुमशक्यत्वात् प्रत्यक्षादीनां न प्रामाण्यमित्यर्थः ॥ ८ ॥

त्रिसूत्र्या त्रैकाल्यासिद्धत्वं व्युत्पादयति ।

पूर्व्वंहि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षसिद्धिः ॥ ९ ॥

प्रमाणस्य पूर्व्वत्वं तावन्न सम्भवति हि यतः प्रमायाः पूर्व्वं २ अध्याय
प्रमाणसिद्धौ प्रमाणसत्त्वे इन्द्रियार्थसन्निकर्षात् प्रत्यक्षं मित्य
तीति न स्यात् प्रत्यक्षप्रमातः पूर्व्वमेव प्रमाणस्य सत्त्वात् प्रमा
णत्वं हि प्रमाकरणत्वं पूर्व्वं प्रमाया अलाभे प्रमाकरणत्वमपि
कथं स्यात् पूर्व्वमेव प्रमायाः सिद्धिरूपेयेति कथं इन्द्रियार्थ
सन्निकर्षात् इन्द्रियार्थसन्निकर्षादितः प्रत्यक्षोत्पत्तिः प्रत्यक्षा
द्युत्पत्तिः परेतु प्रत्यक्षंप्रति करणत्वे खण्डिते तदीयकारणा
न्तरमपि खण्डनीयमित्याशयं सूत्रकृतोवर्णयन्ति प्रमाणस्य
प्रमावैशिष्ट्याभावे प्रमाणमिति ज्ञानेपि प्रमावैशिष्ट्यसंशयः
स्यादिति भावः ॥ ९ ॥

पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥

प्रमाणस्य प्रमातः पश्चात् सिद्धौ विषयस्य प्रमेयत्वं प्रमा
णात्पूर्व्वमेव सिद्धमिति न प्रमाणतः प्रमाया उत्पत्तिः प्रमे
यस्य च ज्ञप्तिरिति ॥ १० ॥

युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वा
भावो बुद्धीनां ॥ ११ ॥

इदञ्च सूत्रद्वयं अनुमानाद्यभिप्रायेण चक्षुःश्रोत्रादेः
प्रमानन्तरं प्रमासमकालं वा सत्त्वस्येष्टत्वादुत्पत्तेः शङ्कितुम

 शक्यत्वात् तदयमर्थः प्रमाणप्रमेययोर्युगपत्सत्त्वे युगपदुत्पत्तौ बुद्धीनामर्थविशेषनियतत्वाद्युक्रमवृत्तित्वं तन्न स्यात् पदज्ञानं हि शब्दविषयकं श्रावणप्रत्यक्षरूपं शाब्दबोधस्य पदार्थविषयकः परोक्षरूपो विजातीय इत्यनयोर्न यौगपद्यं सम्भवति कार्य्यकारणभाववत्त्वात् क्रमिकत्वेनैव सिद्धेरत एवैकमेव ज्ञानमुभयविषयकमित्यपि नाशङ्कनीयं सङ्करप्रसङ्गस्य एवं व्याप्तिज्ञानानुमित्यादावपि द्रष्टव्यं परन्तु प्रमाणप्रमेययोर्न युगपत्सिद्धिर्न युगपत्ज्ञानं बुद्धीनामर्थविशेषनियतत्वात् क्रमवृत्तित्वं तथासति न स्यात्तथाहि चक्षुषो ज्ञानमनुमित्यादिरूपं घटादेश्च प्रत्यक्षादिरूपं न चानयोर्यौगपद्यं सम्भवतीत्यर्थ इत्याहुः ॥ ११ ॥

सिद्धान्तसूत्रं ।

## त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥

यदि त्रैकाल्यासिद्धाप्रमाणान् प्रमेयसिद्धिर्नोपेयते तदा तद्रीत्या त्वदीयः प्रतिषेधोप्यनुपपन्न इति जात्युत्तरमेतदिति भावः किञ्च सर्व्वप्रमाणप्रतिषेधे प्रतिषेधकं प्रमाणमपि नाभ्युपगन्तव्यं ॥ १२ ॥

तथाच कथं प्रतिषेधसिद्धिरित्याह ॥ १३ ॥ 

सर्व्वप्रमाणप्रतिषेधाच्च प्रतिषेधासिद्धिः ॥ १३ ॥

यदि च प्रतिषेधकं प्रमाणमुपेयते तदा कथं सर्व्वप्रमाण प्रतिषेध इत्याह ॥ १४ ॥

तत्प्रामाण्ये वा न सर्व्वप्रतिषेधः ॥ १४ ॥

ननु मन्मते वस्तुसिद्धिर्नापेक्षिता विश्वस्य शून्यत्वात् प्रमाण प्रमेयभावोऽपि न वास्तविकस्त्वन्मते च त्रैकाल्यासिद्धिरुक्तैवे त्यतस्तदुद्धरति ।

त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्त त्सिद्धेः ॥ १५ ॥

त्रैकाल्यप्रतिषेध उक्तः स न सम्भवति कुत इत्यत आह शब्दादिति यथा शब्दात् पश्चाद्भाविनः पूर्व्वसिद्धस्यातोद्यस्य मुर जादेः सिद्धिर्ज्ञप्तिः यथावा पूर्व्वसिद्धात्सूर्य्यादुत्तरकालीनवस्तु प्रकाशनं यथावा वह्निसमकालीनाद्धूमाद्वह्निसिद्धिस्तथा चापि प्रमातः सर्व्वत्र प्रमाणादुत्तरभाविन्याएव प्रमाणस्य चक्षुरादेःपूर्व्वं भावित्वमस्त्येव पूर्व्वं प्रमाशब्दिष्यन्तु तस्य नोपेयते यदा कदाचित्प्रमासम्बन्धेनैव प्रमाणत्वसम्भवाद्यदा कदाचित् पाकसम्बन्धेनैव पाचकमानयेत्यादिवदिति भावः

२ अध्याय: अत्र चकारान्तं न सूत्रान्तर्गतमिति तत्त्वालोके वस्तुतष्टीका दिस्वरसात् सूत्रान्तर्गतमेव ॥ १५ ॥

नन्वऽनियतत्वादेव प्रमाणप्रमेयव्यवहारोन पारमार्थिकः रज्जौ सर्पादिकव्यवहारवदित्याशङ्कायामाह ।

प्रमेयताचतुलाप्रामाण्यवत् ॥ १६ ॥

यथाहि तुलायाः सुवर्णादिगुरुत्वपरिच्छेदकत्वात्प्रमाण व्यवहारस्तुलान्तरेण च तदीयगुरुत्वे यत्तापरिच्छेदे च प्रमेय व्यवहारस्तथा निमित्तद्वयसमावेशादिन्द्रियादेरपि प्रमाण प्रमेयव्यवहार इति यद्वा प्रमाणता प्रमेयता च समाविशेव्या दिति यत्प्रागाशङ्कितं तत्राह प्रमेयता चेति यथा कदाचिद्गु रुत्वयत्तापरिच्छेदकत्वात्तुलायाः प्रमाणव्यवहारस्तथेन्द्रिय घटादेरपि प्रमाणप्रमेयव्यवहार इति ॥ १६ ॥

अनवस्थया प्रत्यवस्थानं परं पूर्वपक्षसूत्रं ।

प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्र सङ्गः ॥ १७ ॥

प्रमाणानां प्रमाणतः सिद्धेः स्वीकारे प्रमाणान्तरस्वीकारः स्यात् तथाहि प्रमाणस्य तावन्नस्वतःसिद्धिरात्माश्रयापत्ते स्तत:प्रमाणान्तरं स्वीकार्यं तयोश्च परस्परसाधकत्वेऽन्यो

न्याश्रयापत्तिरतस्तत्रापि प्रमाणान्तरमङ्गीकार्य्यमित्येवमनव २ स्थापत्तिः
स्येति भावः ॥ १७ ॥

ननु प्रमाणसिद्धिः प्रमाणं विनैव स्यादित्यत आह।

तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्तत्सिद्धिः ॥ १८ ॥

यदि च प्रमाणविनिवृत्तितः प्रमाणव्यतिरेकात् प्रमाण सिद्धिः स्वीक्रियते तदा तद्वदेव तत्सिद्धिः स्वीक्रियतां किंप्रमाणाङ्गीकारेण तथा चाव्यवस्थितमेव जगत्स्यादिति शून्यतायां पर्य्यवसानमिति भावः ॥ १८ ॥

सिद्धान्तसूत्रं।

न प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः ॥ १९ ॥

यथाहि प्रदीपालोकाद्घटादिप्रकाशस्तथा प्रमाणानां प्रमेय प्रकाशकत्वमन्यथा प्रदीपस्य घटप्रकाशकत्वं प्रदीपप्रकाशकं चक्षुस्तज्ज्ञापकमन्यदित्यनवस्थाभयात्प्रदीपोपि न घटप्रकाशकः स्याद्यदि च घटप्रत्यक्षे तत्तत्प्रकाशानां नापेक्षेति नानवस्थेत्युच्यते तदा प्रकृतेपि तुल्यं नहि प्रमाणात्प्रमेयसिद्धौ प्रमाणसिद्धिरपेक्षिता यदा प्रमाणसिद्धिरपेक्षिता तदा तत्रापि प्रमाणमपेक्ष्यतां तच्चानुमानादिकमेवेति न प्रमाणान्तर कल्पना नवानवस्था सर्व्वत्र प्रमाणसिद्धेरनपेक्षितत्वात् क्वचि

२ अध्याय: द्वीजाङ्कुरवदपेक्षापि न क्षतिकरीति भावः प्रदीपस्य प्रदीपान्तरं विना प्रकाशकत्ववत्प्रमाणानामपि प्रमाणमन्तरेणैव प्रमेयप्रकाशकत्वमिति सूत्रार्थं केचन मन्यन्ते तान्प्रत्याह भाष्यकारः क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचित्प्रदीपादौ प्रमाणान्तरान्निवृत्तिदर्शनात् क्वचिद्घटादौ प्रमाणान्तरादनिवृत्तिदर्शनात् प्रमाणान्तरापेक्षादर्शनात्तद्दीपो हेतुरनैकान्तः अनियतः तथाच प्रदीपदृष्टान्तात् प्रमाणान्तरापेक्षा निवृत्तिः साध्यते घटदृष्टान्तेन प्रमाणान्तरापेक्षैवन्द्दितच साध्यते तथा च दृष्टान्तसमा जातिरियमिति भावः तद्व्याख्याने कथं नानैकान्तइत्यत्राह भाष्यकारः विशेषहेतुपरिग्रहे सत्युपसंहाराभ्यनुज्ञानादप्रतिषेधः मन्यते विपक्षहेतोः व्याप्तिपक्षधर्मताश्रयस्य परिग्रहे सत्युपसंहारस्य साध्यसाधनस्याभ्यनुज्ञानादुक्तानैकान्तात्मकः प्रतिषेधोन भवति ॥ १९ ॥

समाप्तं प्रमाणसामान्यपरीक्षाप्रकरणं ॥ १३ ॥

प्रमाणसामान्यपरीक्षानन्तरं प्रमाणविशेषेषु परीक्षणीयेषु प्रथमोद्दिष्टं प्रत्यक्षं परीक्षणीयं तत्र च फलद्वारकमेव लक्षणं पूर्व्वमुक्तमतः फललक्षणं यथाश्रुतमाक्षिपति ।

प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २० ॥

प्रत्यक्षस्य यल्लक्षणमिन्द्रियार्थसन्निकर्षोत्पन्नत्वं तन्नोपपद्यतेऽसमग्रवचनात् अयमर्थः प्रत्यक्षस्य कारणघटितं लक्षणम

भिहितं तच्च कारणकलापघटितायाः सामग्र्या विनिवेशनम 
तिव्याप्तिनिरासकं तच्च नाभिहितं अत्रमयं इन्द्रियार्थसन्निकर्ष जन्यत्वमात्रं ह्यभिहितं आत्ममनःसंयोगेन्द्रियमनःसंयोगादि कन्तु नाभिहितं तथाचात्ममनःसंयोगरूपेन्द्रियार्थसंयोगजन्य तयानुमित्यादावतिव्याप्तिरित्यर्थः ॥ २० ॥

नन्वात्ममनोयोगादेःकारणत्वमेव नास्तीत्याशङ्कायामाह ।

**नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २१ ॥**

शरीरावच्छिन्नस्यात्मनोमनसा यः सन्निकर्षस्तदभावे न प्रत्यक्षोत्पत्तिर्यतोऽत आत्ममनः संयोगस्य कारणत्वमाव श्यकं । प्रत्यक्षोत्पत्तिरिति प्रकृतं ज्ञानोत्पत्तिरिति विवक्षितं ॥ २१ ॥

नन्वेवं दिगादीनामपि कारणत्वं स्यादित्याशङ्कते ।

**दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥**

यथाकथञ्चित्पौर्व्वापर्य्यस्य तत्रापि सत्त्वात्तेषामन्यथासि द्धिश्चेत्प्रकृतेप्येवं ॥ २२ ॥

अत्रोत्तरमभिधातुमाह ।

**ज्ञानलिङ्गत्वादात्मनोनानवरोधः ॥ २३ ॥**

आत्मनोनावरोधोऽसंग्रहः कारणत्वेनेति न कुतः ज्ञान

२ अध्यायः लिङ्गत्वात् ज्ञानं लिङ्गं यस्य तत्तथा ज्ञानं हि भावकार्य्यं समवायि कारणं साधयति तच्च परिशेषादात्मैव दिगादीनाञ्च कारणत्वे नमानमिति भावः इत्यञ्च समवायिकारणस्यात्मनोमनसा संयोगोऽसमवायिकारणमित्यप्यर्थात् सिद्धं ॥ २३ ॥

आत्मशरीरादिसंयोगस्य कुतोनासमवायिकारणत्वमित्यतो मनसः प्राधान्ययुक्तिमाह ।

तदयौगपद्यलिङ्गत्वान्मनसः ॥ २४ ॥

नानवरोध इत्यनुवर्त्तते इन्द्रियमनोयोगद्वारा ज्ञानायौगपद्यनियामकत्वान्मनसोपि हेतुत्वमावश्यकमिति शरीरमनोयोगादेश्च न तन्नियामकत्वमिति भावः इत्यञ्चात्ममनःसंयोगस्यासमवायिकारणत्वं युक्तं ॥ २४ ॥

सिद्धान्तसूत्रं ।

प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य पृथग्वचनं ॥ २५ ॥

प्रत्यक्षनिमित्तत्वात् प्रत्यक्षासाधारणकारणत्वात् अयमर्थः प्रत्यक्षसूत्रे इन्द्रियार्थसन्निकर्षाभिधानं हि नकारणाभिधित्सयायेनात्ममनोयोगाद्यनभिधानेन न्यूनत्वं अपितु लक्षणाभिप्रायेण तत्र च सामग्रीघटितत्वेनासाधारणकारणघटित

श्यापि लक्षणस्य सुखत्वादिन्द्रियार्थसन्निकर्षस्य चासाधारण त्वात् पृथग्वचनं आत्ममनःसंयोगादिसाधारणकारणाद्व च्छिद्य लक्षणघटकतया वचनं युक्तं अयं भावः इन्द्रियार्थसन्नि कर्षत्वावच्छिन्नकारणताप्रतियोगिककार्य्यताशालित्वस्य इन्द्रि यत्वावच्छिन्नकारणताप्रतियोगिककार्य्यताशालित्वस्य वा लक्ष णस्य मन्यक्ते कृतमात्ममनोयोगाद्यनुप्रवेशेनेति परिष्कृतं चेदमधस्तात् इदं न सूत्रं किन्तु भाष्यमिति केचित् ॥ २५ ॥

समाध्यन्तरमाह ।

सुप्तव्यासक्तमनसान्चेन्द्रियार्थयोः सन्निकर्षनि मित्तत्वात् ॥ २६ ॥

ज्ञानस्येति शेषः सुप्तानां व्यासक्तमनसाञ्च घनगर्ज्जिता दिना श्रोत्रसन्निकर्षाउष्णादिना त्वक्सन्निकर्षाच्च प्रागेव ज्ञानोत्पत्तेरिन्द्रियार्थसन्निकर्षस्य प्राधान्यं ॥ २६ ॥

युक्त्यन्तरमाह ।

तैश्चापदेशो ज्ञानविशेषाणां ॥ २७ ॥

ज्ञानविशेषाणां तैरिन्द्रियार्थसन्निकर्षैरपदेशो विशेषणं व्यावृत्तिः आत्ममनोयोगादिकं हि न व्यावर्त्तकं तज्जन्यत्वस्य ज्ञानान्तरसाधारणत्वात् एवमिन्द्रियमनोयोगजत्वमपि न

२ अध्यायः लक्षणं मानमेऽव्याप्तेः परे तु तैरिन्द्रियैर्ज्ञानविशेषाणां प्रत्यक्षविशेषाणामपदेशोभाषणं यतस्तेनेन्द्रियार्थसन्निकर्षस्य प्राधान्यं भावन्तेहि चाक्षुषं प्रत्यक्षं रासनं प्रत्यक्षमितीत्याहुः नव्यास्तुप्रत्यक्षविशेषाणामिन्द्रियैरपदेशोयतोऽतश्चाक्षुषादिघटित विशेषलक्षणान्यपि सम्भवन्ति चाक्षुषत्वत्यनुमित्यवृत्तिजाति मत्त्वादीनि लक्षणान्तराण्यपि द्रष्टव्यानीत्याशयं वर्णयन्ति ॥ २७ ॥

इन्द्रियार्थसन्निकर्षोन हेतुरन्वयव्यभिचारादित्याशयेन शङ्कते ।

व्याहतत्वादहेतुः ॥ २८ ॥

गीतश्रवणादिकाले चक्षुर्घटसंयोगादौ विद्यमानेपि चाक्षुषादेर्व्याहतत्वे इन्द्रियार्थसंयोगोन हेतुरित्यर्थः ॥ २८ ॥

समाधत्ते ।

नार्थविशेषप्राधान्यात् ॥ २९ ॥

अर्थविशेषस्य गीतादेः प्राबल्यात् बुभुत्सितत्वाद्गीतादि श्रवणं तथा च गीतश्रवणादेश्चाक्षुषादि प्रतिबन्धकत्वात् प्रतिबन्धकाभावस्य च कार्य्यजनकत्वात्तत्सहकारेण चेन्द्रियार्थसन्निकर्षस्य हेतुत्वमतः पूर्व्वपक्षोन युक्तइति परेतु इन्द्रियार्थसन्निकर्षस्य

हेतुत्वमित्यत इन्द्रियमनोयोगादेरहेतुत्वमिति भ्रान्तः शङ्कते २ अध्यायः
व्याहतत्वादहेतुः इन्द्रियार्थसन्निकर्षस्यैव हेतुत्वमित्यत्र यो हेतु
रुक्तः स न युक्तः कुत. व्याहतत्वात् इन्द्रियमनोयोगादे हेंतु
ताया अभ्युपगमात्तद्व्याघातापत्तेः भ्रमं खण्डयति नार्थविशेष
प्राबल्यात् नास्ति व्याघातः कुतः अर्थविशेषस्य इन्द्रियार्थस्य
प्राबल्यात् तथा चेन्द्रियार्थसन्निकर्षप्राधान्यार्थं हि पूर्व्वमुक्तं
नत्वितरनिषेधार्थमिति ॥ २९ ॥

ननु यदि प्रत्यक्षस्य प्रमाणान्तरत्वेन लक्षणपरीक्षा सङ्गच्छते
तदेव तु नास्तीत्याशङ्कते ।

प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ३० ॥

प्रत्यक्षत्वेनाभिमतं घटादिज्ञानमनुमानमनुमितिरेकदे
शस्य पुरोभागस्य ग्रहणानन्तरमुपलब्धेस्तथा चैकदेशग्रहणा
त्मकलिङ्गज्ञानजन्यत्वाद्वृक्षादिज्ञानमनुमितिरित्यर्थः ॥ ३० ॥

समाधत्ते ।

न प्रत्यक्षेण यावत्तावदुपलम्भात् ॥ ३१ ॥

प्रत्यक्षमनुमानमिति न प्रत्यक्षत्वावच्छेदेनानुमितित्वं नेत्यर्थः
यावत्तावदुपलम्भात् यावत्तावतापि यस्य कस्यचिद्भागस्य
प्रत्यक्षेणेन्द्रियेणोपलम्भादुपलम्भस्य त्वयाप्यभ्युपगमात् इव

२ अध्यायः मुपलक्षणं शब्दगन्धादिप्रत्यक्षस्यावारणात् न प्रत्यक्षमात्र निषेधइत्यपि बोध्यं ॥ ३१ ॥

यदपि वृक्षादिज्ञानस्यानुमितित्वमिति तदपि दूषयति।

नचैकदेशोपलब्धिरवयविसद्भावात् ॥ ३२ ॥

नच नवेत्यर्थः नचैकदेशस्यैवोपलब्धिरित्यपि युक्तं अवय विसद्भावात् यतोहि अवयव्यस्ति अतस्तदवयवप्रत्यक्षकालेऽव यविनोपि प्रत्यक्षं न व्याहतं तेनापि सह चक्षुः संयोगादिसत्त्वा दिति भावः ॥ ३२ ॥

समाप्तं प्रत्यक्षपरीक्षा प्रकरणं ॥ १४ ॥

अवयविसद्भावादिति हेतुसाधनायोपोद्घातसङ्गत्यावयवि प्रकरणमारभते।

साध्यत्वादवयविनि सन्देहः ॥ ३३ ॥

अत्र चावयविनि सन्देहः साध्यत्वादिति यथाश्रुतार्थान सङ्गतेर्वक्ष्यादौ व्यभिचारात्तस्मादयमर्थः अवयविनि साध्य त्वादसिद्धत्वात् सन्देहोऽवयविसद्भावादित्युक्तहेतुः सन्दिग्धा सिद्धइत्यर्थः तत्रच द्रव्यत्वं स्पर्शवत्त्वं वा अणुत्वाणं न वेत्यादयोविप्रतिपत्तयः तत्र च सकम्पत्वाकम्पत्वरक्तत्वारक्त त्वावृतत्वानावृतत्वादिलक्षणविरुद्धधर्माध्यासादेको ऽवयवी

न सम्भवति तथाहि शाखावच्छेदेन कम्पो मूलावच्छेदेन तद २ अध्यायः
भावोप्युपलभ्यते नचैकस्मिन्नेव द्रव्ये एकदैव विरुद्धधर्म्म
द्वयसमावेशः सम्भवति तस्मादवयवा एव तथाभूता नत्वन्यो
वयवी मानाभावात् एवं महारजनरक्तैकदेशस्यांशुकस्य देशा
वच्छेदेनारक्तत्वोपलम्भादेवं यावत्पृष्ठादेरनावृतत्वोपलम्भा
द्रवसेयं इति बौद्धानां पूर्व्वपक्षः अत्र च बौद्धानां पूर्व्वपक्ष
सूत्राणि वार्त्तिककृता लिखितानि च विस्तारभयान्न लिख्यन्ते
॥ ३३ ॥

सिद्धान्तसूत्रं ।

सर्व्वाग्रहणमवयव्यसिद्धेः ॥ ३४ ॥

अवयविनोऽसिद्धौ तद्गुणकर्म्मादीनां सर्व्वेषामग्रहणं तथा
च सकम्पाकम्पत्वरक्तारक्तत्वादिकमपि न सुग्रहं परमाणुगत
त्वात् प्रत्यक्षे महत्त्वस्य हेतुत्वात् ॥ ३४ ॥

हेत्वन्तरमाह ।

धारणाकर्षणोपपत्तेश्च ॥ ३५ ॥ .

अवयवेभ्योऽवयव्यतिरिच्यते तथासति धारणाकर्षणयोरुप
पत्तेरन्यथा परमाणुपुञ्जत्वे चैकदेशधारणेन सकलधारण
मेकदेशाकर्षणेन सकलाकर्षणञ्च न स्यादित्यर्थः ॥ ३५ ॥

२ अध्यायः इदमवद्यं नौकाकर्षणेन नौकास्याकर्षणवत् कुण्डधारणेन कुण्डस्य दधिधारणवच्चोपपत्तेर्विजातीयसंयोगवत्त्वेनैवावयवावयविभावाभावेप्युपपत्तेरतः पूर्व्वोक्तां युक्तिमेव साधीयसीं मन्यमानस्तच परोक्तं समाधानमाशङ्क्य दूषयति।

**सेनावनादिवदिति चेन्नातीन्द्रियत्वादणूनां ॥ ३६ ॥**

अतिदूरस्थैकमनुष्यैकवृक्षादेरप्रत्यक्षत्वेपि सेनावनादि प्रत्यक्षवदेकपरमाणोरप्रत्यक्षत्वेपि तत्समूहरूपघटादेः प्रत्यक्षं स्यादिति चेन्न तदपि अणूनामतीन्द्रियत्वात् प्रत्यक्षे महत्त्वस्य हेतुत्वात्सेनावनादिप्रत्यक्षं युज्यते नत्वणूनां महत्त्वाभावादिति भावः ॥ ३६ ॥

समाप्तमवयविपरीक्षाप्रकरणं ॥ १५ ॥

अवसरेण क्रमप्राप्तमनुमानं परीक्षितुं पूर्व्वपक्षयति।

**रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणं ॥ ३७ ॥**

अनुमानस्य त्रैविध्यं पूर्व्वमुक्तं तच त्रिविधस्याप्रामाण्ये माधिते ऽनुमानमप्रमाणमर्थात्सिद्धमित्याशयेनेदं अनुमानं अनुमानत्वेनाभिमतं न प्रमाणं प्रमितिकरणं व्यभिचारिहेतुकत्वात् तच त्रिविधं व्यभिचारं दर्शयति रोधेत्यादिना नदीवृद्ध्या पिपीलिकाण्डसञ्चारेण मयूररुतेन च त्र्यनुमानं त्रिविध

मुदाहरणं न सम्भवति नदीरोधाधीननदीवृद्ध्या आश्रमो २ अध्यायः
पघाताधीनपिपीलिकाण्डसञ्चारेण मनुष्यकर्त्तृकमयूरहतस
दृशरुतेन व्यभिचारात् पिपीलिकाण्डसञ्चारस्य वृष्टिहेतु
त्वाभिप्रायेणेदं अथवा लक्षणसूत्रे पूर्व्ववत् पूर्व्वकालीनसाध्यानु
मापकं शेषवदुत्तरकालीनसाध्यानुमापकं सामान्यतोदृष्टं
विद्यमानसाध्यस्याप्यनुमापकमित्यर्थ इत्याशयः एतेन त्रैका
लिकसाध्यानुमापकत्वं सम्भवति परेतु पिपीलिकाण्डसञ्चारे
णात्यन्तोपलानुमानं ततस्स महाभूतक्षोभानुमानं तस्य च वृष्टि
हेतुत्वात्तेन वृष्ट्यनुमानमिति वदन्ति एवमन्यत्रापि व्यभि
चारशङ्कासम्भवाद्व्यभिचारनिश्चयस्यानुमितिहेतोरेव दुर्ल
भत्वात्तत्प्रामाण्यं न सम्भवतीत्याशयः ॥ ३७ ॥

समाधत्ते ।

नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥

अनुमानाप्रामाण्यं न युक्तं एकदेशरोधजनदीवृद्धेस्त्रासज
पिपीलिकाण्डसञ्चारात् मयूरहतसदृशरुताच्च लिङ्गीभूतानां
नदीवृद्ध्यादीनां भिन्नत्वान्न दोषः नच सर्व्वत्र व्यभिचारशङ्का
शत्याच्च तस्यास्तर्केण तदपनयनान्न दोष इत्याशयः ॥ ३८ ॥

समाप्तमनुमानपरीक्षाप्रकरणं ॥ १६ ॥

२ अध्यायः अनुमानस्य त्रिकालविषयत्वमभिमतं तत्रयुक्तं वर्त्तमानाभावेन तदधीनज्ञानयोरतीतानागतयोरभावेन कालत्रयात्मकविषयाभावादित्याशयेन वर्त्तमानपरीक्षाप्रकरणमारभमाणोवर्त्तमानमाक्षिपति।

वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥

वर्त्तमानाभावः अतीतानागतभिन्नकालत्वाभावः च्युत्वा द्यति पततइति पततः फलादेर्ध्र्वावधिकः कश्चनदेशः पतिताध्वा भूम्यवधिकः कश्चनपतितव्याध्वा नतु वर्त्तमानस्य प्रसक्तिरपीति भावः॥ ३९ ॥

समाधत्ते।

तयोरप्यभावोवर्त्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥

वर्त्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात्तयोस्तदपेक्षत्वात् वर्त्तमानध्वंसप्रतियोगित्वं ह्यतीतत्वं वर्त्तमानप्रागभावप्रतियोगित्वं ह्यनागतत्वमिति भावः॥ ४० ॥

ननुतयोःपरस्परापेक्षयैव सिद्धेर्न वर्त्तमानापेक्षेत्यतआह।

नातीतानागतयोरितरेतरापेक्षासिद्धिः ॥ ४१ ॥

अन्योन्याश्रयादिति भावः॥ ४१ ॥

तयोरप्यभावे का क्षतिरतो युक्त्यन्तरमाह। 

**वर्त्तमानाभावे सर्व्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥४२॥**

वर्त्तमानाभावे प्रत्यक्षं नोपपद्यते प्रत्यक्षस्य वर्त्तमानविष यत्वात् अतएवाह सम्बन्धं वर्त्तमानञ्च गृह्यते चक्षुरादिनेति प्रत्यक्षाभावे च सर्व्वमेव ग्रहणं ज्ञानं न स्यात् प्रत्यक्षमूलकत्वा दितरज्ञानानामितिभावः ॥ ४२ ॥

ननु यदि वर्त्तमानध्वंसप्रतियोगित्वमतीतत्वं वर्त्तमान प्रागभावप्रतियोगित्वञ्च भविष्यत्वं तदा वर्त्तमानएव घटे कथं श्याम आसीद्रक्तोभविष्यतीतिधीरतआह।

**कृतताकर्त्तव्यतोपपत्तेरुभयथाग्रहणं ॥४३॥**

वर्त्तमानस्यापि घटादेः श्यामरक्तरूपादीनां कृतता कर्त्त व्यतयोरतीतताभविष्यत्तयोरुपपत्तेर्घटादेरप्यतीतानागतत्वे न व्यवहारः परम्परासम्बन्धादित्यर्थः ॥ ४३ ॥

समाप्तं वर्त्तमानपरीक्षाप्रकरणं ॥ १७ ॥

अथावसरेण क्रमप्राप्तोपमानं परीक्षितुं पूर्व्वपक्षयति।

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥४४॥**

प्रसिद्धसाधर्म्यादुपमानमुक्तं तन्न युक्तं यतः साधर्म्यमात्य न्तिकं प्रायिकमैकदेशिकं वा न सम्भवति नहि आत्यन्तिकसाध

२ अध्यायः र्म्येण गौरिव गौरित्युपमानं प्रवर्त्तते न वा प्रायिकसाधर्म्येण गौरिव महिषइति नच यत्किञ्चित्साधर्म्येण मेरुरिव सर्षप इति साधर्म्यस्य चोपलक्षणत्वाद्वैधर्म्योपमानमप्येवं खण्डनीयं ॥ ४४ ॥

समाधत्ते ।

प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥

प्रसिद्धं प्रकर्षेण महिषादिव्यावृत्या सिद्धं ज्ञातं यत्साधर्म्यन्तज्ज्ञानस्योपमितिकरणत्वान्न दोषः साधर्म्यञ्च प्रकरणाद्यनुसारात्किचित्किञ्चिदिति ॥ ४५ ॥

अनुमानेन चरितार्थं नोपमानं प्रमाणान्तरमिति वैशेषिकमतमाशङ्कते ।

प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥

प्रत्यक्षेण गोसादृश्यविशेषेण अप्रत्यक्षस्य गवयपदवाच्यत्वस्यानुमितेर्नोपमानं मानान्तरमिति ॥ ४६ ॥

अत्रोत्तरयति ।

नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ॥४७॥

अप्रत्यक्षेव्याप्यवत्तयाऽप्रत्यक्षे अनुमानत्वेन प्रमाणार्थं प्रमा

प्रयोजन मुपमानस्य न पश्याम इत्यर्थः अथवा गवये गवय २ अध्यायः इतौ अप्रत्यक्षे गवयपदवाच्यत्वे उपमानस्य प्रमाणार्थं प्रमां उपमानजन्यां प्रमां अनुमानत्वेन न पश्याम इत्यर्थः व्याप्तिज्ञानाभावादिति भावः ॥ ४७ ॥

ननु व्याप्तिज्ञाननियमः कल्प्यतामित्यनुशयेन युक्त्यन्तरमाह ।

तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥

अनुमानादुपमानस्य नाविशेषः तथेत्युपसंहारात् यथा गौस्तथा गवय इति ज्ञानादुपमानसिद्धेरुपमानाधीनसिद्धेरुपमितेः तथाच व्याप्तिज्ञानानपेक्षमादृश्यज्ञानाधीनोपमितिरित्यनुभवसिद्धं किञ्च नानुमिनोमि किन्तूपमिनोमीत्यनुव्यवसायसिद्धोपमितिर्नापलपितुं शक्यत इत्याशयः ॥ ४८ ॥

समाप्तमुपमानप्रामाण्यपरीक्षाप्रकरणं ॥ १७ ॥

क्रमप्राप्तं शब्दं परीक्षितुं पूर्व्वपक्षयति ।

शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥

शब्दोऽनुमानमित्यस्य शाब्दबोधोऽनुमितिरिति पर्य्यवसितार्थस्तथाच शब्दो लिङ्गविधयानुमितिकरणं अर्थस्य शब्दप्रतिपाद्यस्य अनुपलब्धेरप्रत्यक्षत्वात् अनुमेयत्वादिति तथाच शाब्दज्ञानमनुमितिरप्रत्यक्षविषयत्वात् प्रत्यक्षभिन्नत्वादित्यत्र तात्पर्य्यं ॥ ४९ ॥

हेत्वन्तरमाह ।

उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥

उपलब्धेः शब्दत्वेनाभिमताया अनुमितित्वेनाभिमतायाश्च अद्विप्रवृत्तित्वात् अद्विप्रकारत्वात् अनुमितित्वं शाब्दत्वञ्च न जातिद्वयं शब्दस्य लिङ्गविधया बोधकत्वाल्लिङ्गान्तरजज्ञानवद्विजातीयत्वाभावात् ॥ ५० ॥

हेत्वन्तरमाह ।

सम्बन्धाच्च ॥ ५१ ॥

सम्बन्धान्नियतसम्बन्धात् ज्ञायमानादिति शेषः शब्दो हि व्याप्तिग्रहसापेक्षो बोधयति तेन शाब्दबोधोऽनुमितिरिति भावः ॥ ५१ ॥

सिद्धान्तसूत्रं ।

आप्तोपदेशसामर्थ्याच्छब्दादर्थे संप्रत्ययः ॥ ५२ ॥

आप्तस्य भ्रमादिशून्यस्य य उपदेशः शब्दस्तत्र यत्सामर्थ्यं आकाङ्क्षायोग्यतादिमत्त्वं ततः अथवा आप्तं प्राप्तं यदुपदेशसामर्थ्यं आकाङ्क्षादिमत्त्वं ततः तत्सहकारात्साधारण्याय निर्देशस्तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे सम्प्रत्ययः शाब्दबोधः सम्भवतीति नानुमानान्तर्भावः शब्दस्येत्यर्थः शब्दादमुमर्थं प्रत्येमि नत्वनुमिनोमीत्यनुभवादितिभावः ॥ ५२ ॥

शब्दार्थयोः सम्बन्धाभावद्रत्ययाह । २ अध्यायः

पूरणदाहपाटनानुपपत्तेश्च सम्बन्धाभावः ॥ ५३ ॥

शब्देन सहार्थस्य सम्बन्धाभावः व्याप्त्यभावः हेतुमाह पूरणेति यदि शब्दस्यार्थे न व्याप्तिः स्यात्तदान्नाग्निवासीशब्दैर्मुख पूरणमुखदाहमुखपाटनानि स्युः शब्दस्य व्याप्यस्य सत्वेनान्नादेरर्थस्यापि सत्वात् ॥ ५३ ॥

तत्किं शब्दोऽसम्बद्धमेवार्थं प्रत्याययति तथा सत्यतिप्रसङ्ग इत्याशङ्कते ।

शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥

अप्रतिषेधः शब्दार्थयोः सम्बन्धप्रतिषेधोन शब्दार्थयोर्व्यवस्थितत्वात्कश्चिदेव हि शब्दः कञ्चिदेवार्थं बोधयति न सर्व्वः सर्व्वमिति इत्यञ्च सम्बन्धे स्वीकृते तेन सम्बन्धेन व्याप्तिरप्यावश्यकी सचसम्बन्धोम मुखपूरणादिनियामक इति भावः ॥ ५४ ॥

उत्तरयति ।

न सामयिकाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥

सम्मतेऽपि शब्दार्थयोरव्यवस्था न शब्दस्याधीनस्यार्थसंप्रत्ययस्य सामयिकत्वात् शक्तिग्रहाधीनत्वात् शक्तिरूपसम्बन्धेन न

 च व्याप्तिस्वरूपवृत्तिनियामकसम्बन्धाधीनत्वादिति भावः।
॥ ५५ ॥

जातिविशेषे चानियमात् ॥ ५६ ॥

शब्दस्यार्थेन सह न स्वाभाविकः सम्बन्धः जातिविशेषेऽनियमात् शब्दस्यानियतार्थकत्वदर्शनादार्य्या हि यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति म्लेच्छास्तु कङ्गुमिति नियमे तु सर्व्वः सर्व्वं प्रतीयात् आपाततश्चेदं नानाशक्तावपि यत्र यस्य शक्तिग्रहस्तस्य तदर्थोपस्थितेः ॥ ५६ ॥

समाप्तं शब्दसामान्यपरीक्षाप्रकरणं ॥ १८ ॥

शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तं तत्र चादृष्टार्थकशब्दस्य वेदस्य प्रामाण्यं परीक्षितुं पूर्व्वपक्षयति ।

तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥

तस्य दृष्टार्थकव्यतिरिक्तशब्दस्य वेदस्य अप्रामाण्यं कुतः अनृतत्वादिदोषात् तत्र च पुत्रेष्टिकार्य्यादौ क्वचित्फलानुत्पत्तिदर्शनादनृतत्वं व्याघातः पूर्व्वापरविरोधः यथा उदिते जुहोति अनुदिते जुहोति समयाध्युषिते जुहोति श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोऽस्याहुतिमभ्यवहरति

धीऽनुदिते जुहोति श्यावश्वलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति अत्र चोदितादिवाक्यानां निन्दानुमितानिष्टसाधनताबोधकवाक्यविरोधः पौनरुक्त्यादप्रामाण्यं यथा त्रिःप्रथमा मन्वाह त्रिरुत्तमामन्वाहेत्यत्रोत्तमत्वस्य प्रथमत्वपर्य्यवसानात् त्रिःकथनेन च पौनरुक्त्यं एतेषामप्रामाण्ये तद्दृष्टान्तेन तदेककर्तृकत्वेन तदेकजातीयत्वेन वा सर्व्ववेदाप्रामाण्यं साधनीयमिति भावः ॥ ५७ ॥

सिद्धान्तसूत्रं ।

न कर्म्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥

न वेदाप्रामाण्यं कर्म्मकर्तृसाधनवैगुण्यात् फलाभावोपपत्तेः कर्म्मणः क्रियाया वैगुण्यमयथाविधित्वादि कर्तुर्वैगुण्यमविद्वत्त्वादि साधनस्य हविरादेर्वैगुण्यमप्रोक्षितत्वादि यथोक्तकर्म्मणः फलाभावे ह्यनृतत्वं नचैवमस्तीति भावः ॥ ५८ ॥

व्याघात परिहरति ।

अभ्युपेत्यकालभेदे दोषवचनात् ॥ ५९ ॥

न व्याघात इति शेषः अग्न्याधानकाले उदितहोमादिकमभ्युपेत्य स्वीकृत्यानुदितहोमादिकरणे पूर्व्वोक्तदोषकथनान्न व्याघात इत्यर्थः ॥ ५९ ॥

पौनरुक्त्यं परिहरति।

अनुवादोपपत्तेश्च॥६०॥

चः पुनरर्थे अनुवादोपपत्तेः पुनर्न पौनरुक्त्यं निष्प्रयोजनत्वे हि पौनरुक्त्यं दोषउक्तस्त्वले त्वनुवादस्य उपपत्तेः प्रयोजनस्य सम्भवात् एकादशसामधेनीनां प्रथमोत्तमयोः त्रिरभिधाने हि पञ्चदशत्वं सम्भवति तथाच पञ्चदशत्वं श्रूयते इममहं भ्रातृव्यंपञ्चदशावरेण वाग्वज्रेण च बाधे योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मइति॥६०॥

अनुवादस्य सार्थकत्वं लोकसिद्धमित्याह।

वाक्यविभागस्य चार्थग्रहणात्॥६१॥

वाक्यविभागस्य अनुवादत्वेन विभक्तवाक्यस्यार्थग्रहणात् प्रयोजनस्वीकारात् शिष्टैरिति शेषः शिष्टाहि विधायकानुवादकादिभेदेन वाक्यं विभज्यानुवादकस्यापि सप्रयोजनत्वं मन्यन्ते वेदेऽप्येवमिति भावः॥६१॥

वेदे वाक्यविभागं दर्शयति।

विध्यर्थवादानुवादवचनविनियोगात्॥६२॥

मन्त्रब्राह्मणभेदाद्द्विधा वेदस्तत्र ब्राह्मणस्यायं विभागः विधिवचनत्वेनार्थवादवचनत्वेनानुवादवचनत्वेन च वेदस्य

विनियोगात् विभजनात् अथवा विनियोगात् भेदात् तथाच २ अध्याय विध्यादिभेदाद्ब्राह्मणभागस्त्रिधेति शेषः ॥ ६२ ॥

तत्र विधिलक्षणमाह।

विधिर्विधायकः ॥ ६३ ॥

इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः अग्निहोत्रं जुहुयात्स्वर्गकामइत्यादि अर्थवादः अर्थस्य प्रयोजनस्य वदनं विध्यर्थप्रशंसापरं वचनमित्यर्थः अर्थवादोहि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसति ॥ ६३ ॥

तत्र स्तुत्यादिभेदादर्थवादं विभजते।

स्तुतिर्निन्दापरकृतिः पुराकल्पइत्यर्थवादः ॥ ६४ ॥

स्तुतिः सम्यगादिध्यर्थस्य प्रशंसार्थकं वाक्यं यथा सर्व्वजिता वै देवाः सर्व्वमजयन् सर्व्वस्य व्याप्त्यै सर्व्वस्य जित्यै सर्व्वमेवैते नाप्नोति सर्व्वं जयतीत्यादि अनिष्टबोधनद्वारा विध्यप्रवर्त्तकं निन्दा एषवावप्रथमोयज्ञानां यज्ज्योतिष्टोमोय एतेनानिष्ट्वा अन्येन यजते स गर्त्ते पतत्ययमेवैतज्जीर्य्यते प्रवामीयतइत्यादिपुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः यथा हुत्वा वपामेवाग्रेऽभिघारयन्त्यथ पृषदाज्यं तदुहचरकाध्वर्य्यवः पृषदाज्यमेवाग्रेभिघारयत्यग्नेः प्राणाः पृषदाज्यमि

२ अध्यायः त्यभिदधतीत्यादि ऐतिह्यसमाचरिततया कीर्त्तनं पुराकल्पः यथा तस्माद्वा एते पुरा ब्राह्मणा बहिःपवमानं सामस्तोमम स्तौषन् यज्ञं प्रतनवामहइत्यादि ॥ ६४ ॥

अनुवादलक्षणमाह ।

विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥

प्राप्तस्य अनु पश्चात्कथनं सप्रयोजनमनुवादइति सामान्य लक्षणं तद्विशेषो विधिविहितस्येति विध्यनुवादो विहितानुवाद श्चेत्यर्थः अयं चार्थवादानुवादविभागो विधिसमभिव्याहृत वाक्यानां तेन भूतार्थवादरूपाणां वेदान्तवाक्यानामपरि ग्रहान्न न्यूनता ॥ ६५ ॥

शङ्कते ।

नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६६ ॥

शब्दाभ्यासस्य बोधितार्थकशब्दस्य योऽभ्यासः पुनःप्रयोग स्तस्योपपत्तेः सत्त्वात् अनुवादः पुनरुक्तान्न भिद्यतइत्यर्थः ॥ ६६ ॥

समाधत्ते । २ अध्यायः

शीघ्रतरगमनोपदेशवदभ्यासादविशेषः ॥ ६७ ॥

अनुवादस्य पुनरुक्तान्नाविशेषः अभ्यासात् अभ्यासस्य सप्रयोजनत्वात् तत्र दृष्टान्तमाह शीघ्रेति यथा लोके गम्यता मित्युक्त्वा पुनर्गम्यतां गम्यतां इत्यादि कर्म्माविलम्बादिर्बोधार्थ मुच्यते तथाप्रकृतेपीति ॥ ६७ ॥

एवमप्रामाण्यसाधकं निरस्य प्रामाण्यं साधयति ।

मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥

आप्तस्य वेदकर्त्तुः प्रामान्यात् यथार्थोपदेशकत्वात् वेदस्य तदुक्तत्वमर्थाल्लब्धं तेन हेतुना वेदस्य प्रामाण्यमनुमेयं तत्र दृष्टान्तमाह मन्त्रायुर्वेदवदिति मन्त्रो विषादिनाशकः आयुर्व्वेदभागश्च वेदस्यएव तत्र सम्वादेन प्रामाण्यग्रहात् तद्दृष्टान्तेन वेदत्वावच्छेदेन प्रामाण्यमनुमेयं आप्तं गृहीतं प्रामाण्यं यत्र स वेदस्तादृशेन वेदत्वेन प्रामाण्यमनुमेयमिति केचित् ॥ ६८ ॥

समाप्तं शब्दविशेषपरीक्षाप्रकरणं ॥ १८ ॥

इति श्री विश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ विभाग परीक्षानिरपेक्षसाङ्गप्रमाणपरीक्षणं नाम द्वितीयस्या ध्यमाह्निकं ॥ १ ॥ ० ॥

२ अध्याय: अथ विभागसापेक्षप्रमाणपरीक्षणं तदेवचाक्षिकार्थः चत्वारि चात्र प्रकरणानि तत्रादौ चतुष्ट्वपरीक्षाप्रकरणं। अन्यानि च तत्र तत्र वक्ष्यन्ते तत्राक्षेपसूत्रं।

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्

॥ ६८ ॥

प्रमाणानां न चतुष्ट्वं प्रमाणत्वं नोक्तचतुष्कान्यतमत्वव्याप्यं उक्तान्यवृत्तित्वात् तत्रान्यवृत्तित्वं व्युत्पादयति ऐतिह्येत्यादि ऐतिह्यं इतिहोचुरित्यनेन प्रकारेण यदुच्यते तद्धि अनिर्दिष्ट प्रवक्तृकं परम्परागतं वाक्यं यथा वटे वटे यक्षइत्यादि तस्य चाप्तोक्तत्वानिश्चयान्नशब्देऽन्तर्भावइतिभाव. अर्थापत्तिरनुप पद्यमानेनार्थेनोपपादककल्पनं यथावृष्ट्या मेघज्ञानं वृष्ट्या सह मेघस्य वैयधिकरण्यान्न व्याप्तिरिति नानुमानेऽन्तर्भावः सम्भवोऽभ्युयः सहचाराधीनज्ञानं यथासम्भवति ब्राह्मणे विद्या सम्भवति सहस्रे शतं अत्रच व्याप्तिर्नापेक्षितेत्याशय: अभावस्तु विरोध्यभावज्ञानाधीनविरोध्यन्तरकल्पनं यथा नकुलाभाव ज्ञाने नकुलविरोधिनोव्यालस्य कल्पनं अत्रापि व्याप्तिर्नापेक्षि तेत्याशय: अथवा कारणाभावादिना कार्य्याभावादिज्ञानं अभाव: भावनिष्ठव्याप्तिरेवानुमानाङ्गमित्याशय: ॥ ६८ ॥

सिद्धान्तसूत्रं। 

शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानामर्थान्तरभावाच्चाप्रतिषेधः ॥ ७० ॥

न प्रमाणचतुष्टयस्य प्रतिषेधः शब्दे ऐतिह्यस्यानर्थान्तरभावादन्तर्भावात्सामान्यत आप्तोक्तत्वज्ञानसम्भवाद्वस्तुत आप्तोक्तत्वज्ञानं न शाब्दे कारणं किन्त्वाकाङ्क्षादिज्ञानं योग्यताप्रमाधीना च शाब्दप्रमेति अर्थापत्त्यादेरनुमानेऽन्तर्भावः उपपादककल्पनं हि विनाव्याप्तिज्ञानं न सम्भवति वृष्टित्वादावपिमेघजन्यत्वव्याप्तिरस्त्येव सम्भवोपि व्याप्तिमूलकत्वादनुमानं व्याप्त्यनपेक्षित्वे च व्यभिचारादप्रामाण्यं एवमभावोव्याप्तिसापेक्षोनुमानं अभावनिष्ठव्याप्तेस्त्वानुमानाङ्गत्वे न विरोधइति भावः ॥ ७० ॥

सत्यर्थापत्तेः प्रामाण्ये वहिर्भावान्तर्भावचिन्ता तदेवतु नास्तीति तटस्थः शङ्कते।

अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ७१ ॥

असति मेघे वृष्टिर्न भवतीत्यनेन सति मेघे वृष्टिर्भवतीत्यर्थापत्तिविषयस्तत्र च न प्रामाण्यं सत्यपि मेघे वृष्ट्यभावादनैकान्तिकत्वात् ॥ ७१ ॥

समाधत्ते।

अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ७२ ॥

अर्थापत्तेर्नानैकान्तिकत्वमितिशेषः असत्सु मेघेषु नवृष्टिरित्यनेन सति मेघे वृष्टिरिति तत्र च वृष्ट्या मेघज्ञानमभिमतं यत्र च मेघे न वृष्टिज्ञानं तत्रानर्थापत्तावर्थापत्तिभ्रमः नच प्रामाण्यविरोधः व्याप्त्यादिभ्रमाद्भ्रमानुमितिदर्शनादनुमानस्याप्यप्रामाण्यापत्तेः नानैकान्तिकत्वमर्थापत्तेरितिभाष्यस्यावतारणिकां सूत्रादौ केचिल्लिखन्ति ॥ ७२ ॥

प्रतिबन्धिमप्याह।

प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ७३ ॥

त्वदुक्तरीत्या त्वदीयप्रतिषेधस्याप्यप्रामाण्यंस्यादनैकान्तिकत्वात् यत्र कुत्रचिदनैकान्तिकत्वस्य प्रतिषेधासाधकत्वादनैकान्तिकत्वात् ॥ ७३ ॥

अथ यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय किन्तु स्वविषयेइति यदि तदार्थापत्तेरपि नाप्रामाण्यमित्याह।

तत्प्रामाण्येवा नार्थापत्त्यप्रामाण्यं ॥ ७४ ॥

अनैकान्तिकत्वस्य स्वविषयेसाधकत्वाद्यदि स्वहेतोः प्रामाण्यंमन्यसे तदार्थापत्तेरपि स्वविषये प्रामाण्यमिति ॥ ७४ ॥

अभावस्य न प्रमाणेऽन्तर्भावइति तटस्थः शङ्कते। 

नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७५ ॥

अभावनामकं प्रमाणं तदा स्याद्यदि तस्य प्रमेयं सिद्ध्येत्तदेवतु नास्ति अभावस्य तुच्छत्वान्न तत्र प्रमाणप्रवृत्तिरिति भावः ॥ ७५ ॥

सिद्धान्तसूत्रं।

लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ॥ ७६ ॥

तस्याभावप्रमाणस्य प्रमेयसिद्धिः भावप्रधानोनिर्देशः किन्तत्प्रमेयनित्यत्राह लक्षितेषु घटादिषु लक्षितानां तत्प्रमेयत्वसिद्धिः अलक्षितानां कथं प्रमेयत्वमतआह लक्षणलक्षितत्वादिति यद्यप्यभावस्य गुणकर्म्मादिभिर्लक्षणं न सम्भवति तथाप्यलक्षणेनैव तल्लक्षितं भवति अनीलमानयेत्युक्ते नीलाभावोहि इतरव्यावर्त्तकतया लक्षणं अतोऽभावोनाप्रामाणिक इतिभावः ॥ ७६ ॥

आक्षिप्य समाधत्ते।

असत्यर्थेनाभावइति चेन्नान्यलक्षणोपपत्तेः ॥ ७७ ॥

असति प्रतियोगिन्यभावोवक्तुं न शक्यते सतिच प्रतियोगिनि

२ अध्यायः कथं तदभावइति चेन्नान्यत्र लक्षणेन सत्त्वेनार्थात्प्रतियोगिनः उपपत्तेरभावोपपत्तेः न हि तत्रैव प्रतियोगिनः सत्त्वमपेक्षितं ॥ ७७ ॥

शङ्कते ।

तत्सिद्धेरलक्षितेष्वहेतुः ॥ ७८ ॥

लक्षितेषु लक्षणस्य तत्सिद्धेः व्यावर्त्तकत्वसिद्धेरलक्षितेषु अहेतुः अहेतुत्वं व्यावृत्तहेतुत्वं अभावस्य लक्षणाभावान्निःस्वरूपस्य न व्यावर्त्तत्वमिति भावः ॥ ७८ ॥

समाधत्ते ।

न लक्षणावस्थितापेक्षसिद्धेः ॥ ७९ ॥

पूर्व्वपक्षेण युक्तः प्रतियोगिनो लक्षणस्य यदवस्थितमवस्थानं तस्यापेक्षया तादृशसिद्धेः अयमर्थः प्रतियोगिस्वरूपज्ञानादेवाभावस्वरूपनिरूपणसम्भवान्नाभावलक्षणापेक्षेति भावः ॥ ७९ ॥

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ ८० ॥

प्रमेयसिद्धिरिति मण्डूकाप्लुत्यानुवर्त्तते प्रतियोगि उत्पत्तेः प्राक् अभावस्य उपपत्तेः उपलम्भात् घटो भविष्यती

त्यादिप्रागभावविषयकप्रत्यक्षस्य सार्व्वलौकिकत्वादिति भावः २ अध्यायः
चकारेण ध्वंसादेरपि प्रत्यक्षसिद्धत्वं समुच्चीयते चेष्टाया
निर्व्यापारत्वेन न प्रामाण्यं वस्तुतोलिप्यादिवत्साङ्केतिकत्वात्त
स्याप्यनुमाने शब्देवान्तर्भावइति ॥ ८० ॥

समाप्तं प्रमाणचतुष्टप्रकरणं ॥ २० ॥

वेदस्य प्रामाण्यमाप्तप्रामाण्यात्सिद्धं न चेदं युज्यते वेदस्य नित्यत्वादित्याशङ्कायां वर्णानामनित्यत्वात् कथं तत्समुदाय रूपस्य वेदस्य नित्यत्वमित्याशयेन शब्दानित्यत्वप्रकरणमा रभतेतत्र सिद्धान्तसूत्रं।

आदिमत्त्वादैन्द्रियकत्वात् कृतकादुपचाराच्च ॥ ८१ ॥

शब्दोऽनित्यइत्यादिः आदिमत्त्वात्सकारणकत्वात् ननु न सकारणकत्वं कण्ठताल्वाद्यभिघातादेर्व्यञ्जकत्वेनाप्युपपत्तेरत आह ऐन्द्रियकत्वादिति सामान्यवत्त्वेसति बहिरिन्द्रियजन्य लौकिकप्रत्यक्षविषयत्वादित्यर्थः परंतु ऐन्द्रियकत्वं लौकिक प्रत्यक्षविशेष्यत्वं सामान्यसमवाययोस्तु न तथात्वं जातित्वा दिना विशेष्यत्वसम्भवेपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः मनसइन्द्रियत्वाभावाच्च नात्मनि व्यभिचार आत्मनऐन्द्रिय कत्वाभावाचेत्याहुः अप्रयोजकत्वमाशंक्याह कृतकेति कृतके

२ अध्यायः घटादौ यथाउपचारोऽज्ञानं तथैव कार्य्यत्वप्रकारकप्रत्यक्ष विषयत्वादित्यर्थः तथाच कार्य्यत्वेनानाहार्य्यसार्व्वलौकिकप्रत्य क्षबलादनित्यत्वमेव सिध्यति केचित्तु उपचारादिनाशित्वात् कृतकवत् इतिदृष्टान्तइति परेतु कृतकवदुपचारात् कृतक सुखदुःखादिवद्व्यवहारात् यथाहि सुखादौ तीव्रमन्दादिव्यव हारः शब्देप्येवं नतु नित्ये तथेत्याहुः ॥ ८१ ॥

यथाश्रुते हेतूनां व्यभिचारमाशङ्कते।

न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यव दुपचाराच्च ॥ ८२ ॥

नोक्ता हेतवः घटाभावस्य घटध्वंसस्य नित्यत्वादविनाशि त्वादादिमत्त्वं व्यभिचारिऐन्द्रियकत्वं सामान्ये व्यभिचारिनि त्येष्वप्यनित्यवदुपचारात् यथा घटाकाशमुत्पन्नं अहंसुखी जातइत्यादि ॥ ८२ ॥

व्यभिचारं परिहरति।

तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः ॥ ८३ ॥

तत्त्वस्य पारमार्थिकस्य भाक्तस्य च नानात्वस्य भेदस्य विभा गात् विवेकान्न व्यभिचारः ध्वंसेहि उत्पत्तिमत्त्वं आदिमत्त्वं

चैकालिकत्वरूप नित्यत्वाभावरूपस्यानित्यत्वमस्त्येवाविनाशि २ अध्याय: त्वानित्यत्वमौपचारिकमतोन व्यभिचारः आदिमत्त्वं प्राग भावावच्छिन्नसत्त्वं नचैतदभावइति वार्थः ॥ ८३ ॥

द्वितीये व्यभिचारमुद्धरति।

सन्तानानुमानविशेषणात् ॥ ८४ ॥

सन्तानानुमानेऽनुमितिकरणे लिङ्गविशेषणात् सन्तानः सन्तन्यमानः एकधर्मावच्छिन्नत्वेन ज्ञायमानः तेन सामान्यवत्त्वे सतीति विशेषणीयमिति ॥ ८४ ॥

तृतीये व्यभिचारं वारयति।

कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् ॥ ८५ ॥

आकाशे हेतुर्नास्त्येव आकाशे प्रादेशिकत्वव्यवहारस्तु गौणः प्रदेशशब्देन कारणद्रव्यस्य कारणवतोद्रव्यस्याभिधानान्नचा काशं तादृशं तादृशत्वे वा साध्यसत्त्वान्न व्यभिचारः एवं सुखी जात इत्यादौ सुखाद्युत्पत्तिरेव विषयइति भावः ॥ ८५ ॥

नचोक्तहेतूनामप्रयोजकत्वं विपक्षबाधकसत्त्वादित्याह।

प्रागुच्चारणादनुपलम्भादावरणाद्यनुपलब्धेः ॥ ८६ ॥

२ अध्यायः शब्दोयदि नित्यःस्यादुच्चारणात् प्रागप्युपलभ्येत श्रोत्र सन्निकर्षसत्त्वान्नचात्र प्रतिबन्धकमस्तीत्याह्नावरणेति आव रणादेः प्रतिबन्धकस्यानुपलब्ध्याऽभावनिर्णयात् देशान्तर गमनन्तु शब्दस्यामूर्त्तत्वान्नसम्भाव्यते अतीन्द्रियानन्तप्रतिब न्धकत्वकल्पनामपेक्ष्यशब्दानित्यत्वकल्पनैव लघीयसीतिभावः ॥ ८६ ॥

भ्रान्तस्य पूर्व्वपक्षपरं सूत्रद्वयं।

तदनुपलब्धेरनुपलम्भादावरणोपलब्धिः ॥ ८७ ॥

अनुपलम्भादनुपलब्धिरुक्तावबन्न वरणानुपपत्तिरनुपल म्भात् यथा त्वया आवरणस्यानुपलब्ध्या अभावइत्युच्यते तथा आवरणानुपलब्धेरनुपलम्भ त्तदभावआवरणोपलब्धि रेव स्यात् यदिवा आवरणानुपलब्धेरनुपलम्भेपि नावरणानु पलब्धेरभावस्तदा आवरणस्यानुपलम्भादपि नावरणस्यानुप पत्तिरित्यर्थः ॥ ८७ ॥

सिद्धान्तसूत्रं।

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ८८ ॥

आवरणानुपलब्धेरनुपलम्भादावरणोपलब्धिरिति जात्यु त्तरं अहेतुः न मन्मतप्रतिषेधसाधनं अनुपलब्धेरावरणानुप

लब्धेरनुपलम्भात्मकत्वादुपलम्भाभावात्मकत्वात्तस्य च मनसि २ अध्याये
व सुग्रहत्वात्तदनुपलब्धिरसिद्धेति भावः ॥ ८८ ॥

सत्प्रतिपक्षमाशङ्कते ।

अस्पर्शत्वात् ॥ ८९ ॥

शब्दोनित्यः अस्पर्शत्वाद्गगनवदिति भावः ॥ ८९ ॥

न सत्प्रतिपक्षत्वदीयहेतोरनैकान्तिकत्वादित्याह ।

न कर्म्मानित्यत्वात् ॥ ९० ॥

अस्पर्शत्वं न शब्दनित्यत्वसाधकं कर्म्मणि व्यभिचारात् ॥ ९० ॥

अनैकान्तिकमपि साधकंस्यादत्राह ।

नाणुनित्यत्वात् ॥ ९१ ॥

अनैकान्तिकस्य साधकत्वेऽणोः परमाणोर्नित्यत्वं नस्याद्रूप
वत्त्वादिना तथानित्यत्वानुमानापत्तेरित्यर्थः ॥ ९१ ॥

शङ्कते ।

सम्प्रदानात् ॥ ९२ ॥

गुरुणा शिष्याय विद्यायाः सम्प्रदानात् तथाच शब्दस्य
प्राक्सत्त्वं सिद्धं तथाच तावत्कालं स्थिरं चैनं कःपश्चान्नाशयि
ष्यतीति न्यायान्नित्यत्वमर्थसिद्धमिति भावः ॥ ९२ ॥

सिद्धान्तसूत्रं।

तदन्तरालानुपलब्धेरहेतुः ॥ ९३ ॥

शिष्ये उपसन्ने गुरुरध्यापयति यदि च शब्दोऽनित्यः स्यात्तदा शिष्यागमनानन्तरमध्यापनात् पूर्व्वमपि शब्द उपलभ्येतेत्यनुपलब्ध्या च नास्ति शब्द इत्यतस्तदुक्तोऽन हेतुः ॥ ९३ ॥

पूर्व्वपक्षसूत्रं।

अध्यापनादप्रतिषेधः ॥ ९४ ॥

मदीयहेतोः प्रतिषेधो न युक्तः कुतः अध्यापनात् यद्यन्तरालकाले शब्दो न स्यात् कथमध्यापनं घटेत अनुपलब्धिस्तु शब्दस्य कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावादुपपद्यत इति भावः आचार्य्यास्तु सूत्रद्वयमेवं प्रचक्षते विभक्तिव्यत्यासाद हेतोस्तदनन्तरालानुपलब्धिरर्थस्तथा च हेतोः स्वलक्षाभावात्तदनन्तरालस्य स्वलब्धंसस्यानुपलब्धिरतो न दानमित्यर्थः प्रतिषेधो न युक्तः न हि दानं ममाभिप्रेतं किन्त्वध्यापनं तच्च विद्यमानस्य शब्दस्यैवेति भावः ॥ ९४ ॥

सिद्धान्तसूत्रं।

उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ ९५ ॥

अन्यतरस्य पक्षस्यानित्यत्वसाधकस्याध्यापनाद्यः प्रतिषेधः २ अध्याया स न सम्भवति उभयोः पक्षयोरध्यापनस्य समानत्वादिति शेषः अध्यापनं हि गुरूच्चारणानूच्चारणं शिष्योच्चारणानुकूलोच्चारणं वा तच्च स्थैर्यास्थैर्यपक्षयोस्तुल्यं न शब्दनित्यतायाः सहायकं विधातुमलं न ह्यध्यापनं दानं येन स्वस्वत्वध्वंसपरस्वत्वापादनार्थं तस्य स्थैर्य्यमाशङ्कनीयं न वा सम्भवति बहूनामेकदास्वत्वविरोधात्परस्वत्वापादनासम्भवाच्च अपितु नृत्याध्यापनादाविवोपदेशमात्रमिति भावः ॥ ९५ ॥

पूर्व्वपक्षसूत्रं ।

अभ्यासात् ॥ ९६ ॥

यद्धि स्थिरं तदभ्यस्यमानं दृष्टं यथा दशकृत्वो रूपं पश्यति एवं शतकृत्वोनुवाक्यमधीत इत्यभ्यासात्स्थैर्य्यं शब्दस्येति भावः ॥ ९६ ॥

उत्तरयति ।

अन्यत्वेप्यभ्यासस्योपचारात् ॥ ९७ ॥

पूर्व्वपक्षेोन युक्तः कुतः अन्यत्वे भेदेपि शब्दानां अध्यापनाभ्यासस्य उपचारात्सम्भवात् न ह्यभ्यासः स्थैर्य्यं साधयति द्विर्जुहोति त्रिर्नृत्यतीत्यादौ भेदेप्यभ्यासदर्शनादिति भावः ॥ ९७ ॥

२ अध्यायः अन्यतैव जगति नास्तीति कथमन्यत्वेऽभ्यासोपपत्तिरिति तटस्थ आशङ्कते।

अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ॥ ९८ ॥

यदन्यस्मादन्यदुच्यते तत्स्वस्मादनन्य दभिन्नं तत्कथमन्यद्भेदाभेदयोर्विरोधादिति भावः स्वाभेदस्यावश्यकत्वमिति हृदयं ॥ ९८ ॥

समाधत्ते।

तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ९९ ॥

तदभावेऽन्यत्वस्याभावेऽनन्यतापि नास्ति तयोर्भेदाभेदयोः सिद्धेः परस्परसापेक्षत्वात् वस्तुतस्तु तयोर्मध्यइतरस्य एकतरस्य अनन्यत्वस्य इतरापेक्षसिद्धेः इतरत्वस्य भेदस्य ज्ञानापेक्षासिद्धिर्व्यक्तस्य तादृशत्वादित्यर्थः ॥ ९९ ॥

शङ्कते।

विनाशकारणानुपलब्धेः ॥ १०० ॥

बुद्धिर्नित्य इत्यादिः अनुपलब्धिरप्रत्यक्षमज्ञानं वा ॥ १०० ॥

आद्ये प्रतिबन्दिमाह।

अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ १०१ ॥

यद्यप्रत्यक्षत्वादभावसिद्धिस्तदा श्रवणकारणस्याप्रत्यक्षत्वादश्रवणं न स्यादिति सततश्रवणप्रसङ्ग इत्यर्थः ॥ १०१ ॥

द्वितीयंत्वाह।

उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ १०२ ॥

अनुमानादिना उपलभ्यमाने विनाशकारणे अनुपलब्धेरभावात्तदीयो हेतुरनपदेशः असाधकः असिद्धत्वात् जन्यभावत्वेन विनाशकत्वदर्शनमिति भावः ॥ १०२ ॥

सिद्धान्तिनः सूत्रान्तरं।

पाणिनिमित्तप्रश्लेषाच्छब्दाभावेनानुपलब्धिः ॥ १०३ ॥

शब्दायमाने कांस्यादौ पाणिरूपनिमित्तस्य प्रश्लेषात् संयोगाच्छब्दाभावे उपलभ्यमाने शब्दाभावकारणस्य नानुपलब्धिरिति यथाश्रुतानुयायिनः परेतु पाणिरूपनिमित्तस्य प्रश्लेषः सम्बन्धो यत्र स पाणिजः शब्दः अर्थात् उत्तरशब्दः तच्छब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थ इत्याहुः अन्येतु पूर्व्वसूत्रेशब्दस्य तावद्वेगात्मकः संस्कारविशेषो हेतु

२ अध्यायः स्तस्य तीव्रतीव्रतरमन्दमन्दतरत्वाच्छब्दोपि तादृशः तत्रचो त्तरशब्दानां पूर्व्वशब्दनाशकत्वं कल्प्यतइत्यर्थः ननु तादृश संस्कारएव नास्तीत्यत्राह पाणीति नानुपलब्धिः संस्कारस्येति शेषः पाणेर्निमित्तस्य प्रश्लेषात् घण्टादिसंयोगात्संस्काररूपका रणाभावद्वारा शब्दाभावे शब्दानुत्पत्तौ नानुपलम्भः संस्का रस्येत्यर्थ इत्याहुः ॥ १०३ ॥

ननु घण्टादिपाणिसंयोगस्य शब्दनिवर्त्तकत्वे घण्टाद्या श्रयएव शब्दः स्यादित्याशङ्कायामाह ।

अस्पर्शत्वादप्रतिषेधः ॥ १०४ ॥

उक्तः प्रतिषेधोन सम्भवति अस्पर्शत्वात् शब्दाश्रयस्येति शेषः शब्दोहि न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकार णकत्वाभाववदकारण गुणपूर्व्वककार्य्यत्वादित्याशयः ॥ १०४ ॥

एतदेव व्युत्पादयितुमाह ।

विभक्त्यन्तरोपपत्तेश्च समासे ॥ १०५ ॥

समासेस्पर्शादिसमुदाये साहित्येन शब्दोवर्त्ततइति न युक्तं विभक्त्यन्तरस्य विभागान्तरस्य तारमन्दादेरुपपत्तेः अय मर्थः एकस्मिन्नेव शङ्खादौ तारमन्दादि नानाशब्दा जायन्ते तस्मादयमुचिताग्निसंयोगं न परावर्त्तन्तइति भावः ॥ १०५ ॥

प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं प्रदर्शयति।

विकारापदेशोपदेशात्संशयः ॥ १०६ ॥

इकोयणचीत्यादिना इकारादेर्विकारोयकारादिरिति केचित् व्याचक्षते परेतु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशमादिशन्ति अतश्च वर्णाविकारिणोन वेति संशयः विकारस्य स्वरूपस्य विनाशेऽविनाशे वा द्रव्यान्तरारम्भकत्वं यथा दुग्धादेर्दध्यारम्भकत्वं बीजादेर्वृक्षाद्यारम्भकत्वञ्च सुवर्णादेरपि कौह्वाघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येवकुण्डलारम्भः कपालादेश्च स्वरूपाविनाशेन घटाद्यारम्भकत्वं ॥ १०६ ॥

तत्र विकार निराकरणाय सूत्रं।

प्रकृतिविवृद्धौ विकारविवृद्धेश्च ॥ १०७ ॥

न वर्णाविकारिणस्तथा सति तत्प्रकृतेरुपादानत्वाभिम तस्यविवृद्धौ विकारस्यापि विवृद्ध्यापत्तेः महदल्पावयवा रब्धावयविनोमहदल्पत्ववत् ह्रस्वेकारारब्धयकारापेक्षया दीर्घेकारारब्धयकारस्य विवृद्धिः स्यादित्यर्थः तस्मादादेश पक्षः श्रेयानिति भावः ॥ १०७ ॥

२ अध्यायः

आक्षिपति।

न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥१०८॥

उक्तो हेतुर्न युक्तः विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकत्वस्य चोपलब्धेर्दर्शनात् यथा तूलकपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणः यथा वा न्यग्रोधबीजादुत्कृष्टे नारिकेलीबीजेन न्यग्रोधादल्पो नारिकेलीतरुर्जायते कणकादिसमपरिमाणं कटकादि च यथा वा न्यूनाधिकनारिकेलीबीजाभ्यां समौ वृक्षौ न्यूनपरिमाणवटबीजाभ्यां समौ वृक्षौ न्यूनपरिमाणाच्च वटबीजात् महान्वटतरुरिति ॥१०८॥

समाधत्ते।

नातुल्यप्रकृतीनां विकारविकल्पात् ॥१०९॥

नोक्तं समाधानं युक्तं अतुल्यप्रकृतीनां भिन्नप्रकृतीनां हि विकाराणां विकल्पः वैलक्षण्यं मयाभिहितं नहि बीजादेर्ह्रासवृद्ध्यादिना वृक्षादेर्ह्रासवृद्ध्यादिकं प्रकारान्तरं तदुक्तवैलक्षण्यन्तु तत्राप्यस्ति तथा च तदुक्तमुपचारकृतमिति भावः ॥१०९॥

शङ्कते।

द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः ॥११०॥

द्रव्यत्वेन न्यग्रोधादिप्रकृतीनां तुल्यत्वेऽपि विकारवैषम्यं यथा

एवमेव वर्णत्वेन तुल्ययोरपि ह्रस्वदीर्घयोर्यो विकारो यकार २ स्थान्यः तस्य अविकल्प एकरूप्यं नानुपपन्नमित्यर्थः ॥ ११० ॥

समाधत्ते ।

न विकारधर्मानुपपत्तेः ॥ १११ ॥

नात्र द्रव्यविकारतुल्यताविकाराणां हि अयं धर्मो यत्प्रकृत्यनुविधानं तद्भेदे भेद इति प्रकृते तदनुपपत्तिः ह्रस्वत्वदीर्घत्वादिना प्रकृतिभेदेऽपि कार्य्यभेदाभावात् ॥ १११ ॥

इतश्च न विकार इत्याह ।

विकारप्राप्तानामपुनरावृत्तेः ॥ ११२ ॥

विकारप्राप्तस्य न पुनः प्रकृतिरूपता दृष्टा न खलु दधि क्षीरतां प्राप्तं पुनर्विकारतामापद्यते इकारस्तु यकारतां प्राप्तः पुनरिकारतामापद्यते दध्यत्रेत्युक्त्वा पुनरपि दधि अत्रेत्युच्यत एवेति भावः ॥ ११२ ॥

आक्षिपति ।

सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ११३ ॥

उक्तो हेतुर्न युक्तः सुवर्णादिकं हि कटकीभावं विहाय कुण्डलतामापन्नं पुनः कटकतामापद्यत एवेति भावः ॥ ११३ ॥

निराकरोति।

न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ११४ ॥

सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता न तु कटकत्वादिना तत्रोभयमपि सुवर्णभावं न जहाति यदि हि सुवर्णतामपहाय कटकतामापन्नं पुनः सुवर्णता तदा व्यभिचारः स्यादेव नचैवं प्रकृते इकारतां हित्वा यकारतां प्राप्तस्यापीकारतापत्तिरस्त्येवेति दोषादुःपरिहर इति भावः ॥ ११४ ॥

अविकारे युक्त्यन्तरमाह।

नित्यत्वे विकारादनित्यत्वे चानवस्थानात् ॥ ११५ ॥

वर्णानां नित्यत्वे विकारासम्भवादनित्यत्वे चाचिरस्थायित्वेनेकारप्रत्यक्षानन्तरमिकारनाशाद्विकारानुपपत्तिरित्यर्थः ॥ ११५ ॥

अत्र विकारवादी नित्यत्वमतमालम्ब्य परिहरति।

नित्यानामतीन्द्रियत्वाद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ११६ ॥

विकाराणां प्रतिषेधोन युक्तः नित्यानां धर्मविकल्पाद्धर्मस्य नानाविधत्वादतीन्द्रियत्वात् चकारेणेन्द्रियकत्वं समुच्चीयते यथा हि नित्यानामाकाशादीनामतीन्द्रियत्वेपि गोत्वादीनां

नित्यत्वमेवमन्येषां नित्यानामविकारित्वेपि वर्णानां विकारि २ अध्यायः
त्वंस्यादिति ॥ ११६ ॥

अनित्यत्वमालम्ब्य सम्राह ।

**अनवस्थायित्वे च वर्णोपलब्धिवत्तदुपपत्तिः ॥११७॥**

अनवस्थायित्वेपि वर्णानां यथाप्रत्यक्षंभवत्येवं विकारोपि स्यादिति भावः ॥ ११७ ॥

उभयत्रोत्तरयति ।

**विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ११८ ॥**

उक्तः प्रतिषेधोन युक्तः विकारधर्मित्वे नित्यत्वासम्भवात् विकारोह्यन्न स्वरूपपरित्यागेन रूपान्तरापत्तिः तथात्वेच नित्यत्वविरोधात् न हि घटादेः कपालाद्युपादेयत्वप्रकृतिः सम्भवति यकारकाले इकारानुपलब्धेः अनित्यत्वपक्षेपि प्रतिषेधोन युक्तः प्रत्यक्षं हि वर्णस्य द्वितीयक्षणे युज्यते विकारस्तु कालान्तरीयोन युज्यते दधीति शब्दानन्तरमत्रेत्यादि शब्देन तस्य नाशादिति भावः ॥ ११८ ॥

इतश्च विकारानुपपत्तिरित्याह।

प्रकृत्यनियमात् ॥ ११९ ॥

विकाराणां हि प्रकृतिनियमो यथा क्षीरदध्नोः प्रकृति विकारभावो मतु वैपरीत्यं प्रकृते तु दध्यत्रेत्यादौ विकारो यकारप्रकृतिर्विध्यतीत्यादौ तु यकार इकारप्रकृतिरिति भावः ॥ ११९ ॥

अत्र छलवादी प्रत्यवतिष्ठते।

अनियमे नियमान्नानियमः ॥ १२० ॥

अनियमो यउक्तः स न युक्तः कुतः अनियतत्वस्य नियमादित्यर्थः ॥ १२० ॥

समाधत्ते।

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ १२१ ॥

अनियमे यत्त्वया नियमप्रतिषेधः कृतः स न युक्तः कुतः नियमानियमयोर्विरोधात् अनियमो हि नियमाभावस्तस्मिन्सति नियमासम्भवादिति भावः ॥ १२१ ॥

तदेवं वर्णानां प्रकृतिविकारभावं निरस्य स्वपक्षे विकार २ अध्यायः
व्यवहारमुपपादयति।

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु वर्ण विकारोपपत्तेर्वर्णविकारः ॥ १२२ ॥

तुशब्दः पुनरर्थे एतेभ्यः पुनर्व्वर्णविकारोपपत्तेर्वर्णविकारस्य एकवर्णप्रयोगेण वर्णान्तरप्रयोगस्य उपपत्तेर्वर्णविकार इति व्यवह्रियते तानेवाह गुणान्तरेति गुणान्तरापत्तिर्धर्मिणि सत्येव धर्मान्तरापत्तिः यथोदात्तेऽनुदात्तत्वं उपमर्दो धर्मिनिवृत्तौ धर्म्मान्तरप्रयोगः यथास्तेर्भूः ह्रासो दीर्घस्य ह्रस्वत्वं वृद्धिः ह्रस्वस्य दीर्घत्वं लेशः अल्पत्वं यथाऽस्तेरकारलोपः श्लेष आगमः एतैः कारणैर्विकारव्यवहार इति ॥ १२२ ॥

समाप्तं शब्दपरिणामप्रकरणं ॥ २२ ॥

शाब्दबोधे पदजन्यपदार्थोपस्थितेर्हेतुत्वात्तदुपपादनाय पदार्थं निरूपणीये पदमादौ निरूपयति।

ते विभक्त्यन्ताः पदं ॥ १२३ ॥

ते वर्णा विभक्त्यन्ताः पदं तद्रूलमविवक्षितं विभक्तेश्च सत्त्वमनपेक्षितं विभक्तिश्च सुप्तिङ्‌रूपा वस्तुतस्तु नेदं पदं शाब्दबोधोपयोगि किन्त्विदमाकाङ्क्षास्वरूपमथ वा विभक्तिर्वृत्तिरन्त्यः शब्दस्तेन वृत्तिमत्त्वं पदत्वमिति इत्यञ्च पदं निरूप्य तदर्थ

२ अध्यायः निरूपणं सङ्गच्छते यत्तु प्रसङ्गात् पदार्थनिरूपणमिति तन्न पदनिरूपणस्यासङ्गतत्वापत्तेः एतत्सूत्रस्य प्रकरणत्वाभावात् ॥ १२३ ॥

तत्र पदे निरूपिते तद्वाच्यत्वं पदार्थत्वंनिरूपितं तत्रापि धात्वाद्यर्थस्य निर्विवादत्वाद्गवादिपदार्थं निरूपयितुमाह ।

तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात्संशयः ॥ १२४ ॥

व्यक्तिर्गवादिः जातिःगोत्वादिराकृतिरवयवसंस्थानविशेषः तेषां सन्निधिः सामीप्यं मिलनं तत्र सति उपचारात् ज्ञानात् तथाच त्रयाणां युगपत्प्रत्ययात्किमेतेषां प्रत्येकं पदार्थउत समस्तमिति संशयइत्यर्थः इदंभाष्यमिति केचित् वस्तुतस्तु दुर्बोधादिस्वरसात् सूत्रमेव तदर्थइत्यंशस्तु भाष्यकृतः पूरणमिति प्रतिभाति ॥ १२४ ॥

तत्र व्यक्तिशक्तिवादिनोमतमाह ।

याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ॥ १२५ ॥

पदार्थइति शेषः उक्तानां उपचारात् व्यवहारात् अनुबन्धः प्रजननं या गौर्गच्छतीत्यादि व्यवहारोव्यक्तावेव

आत्याहत्योरमूर्त्तत्वात् एवं गवां समूहः गां ददाति गां २ अध्यायः प्रतिगृह्णाति दश गावः गौर्वर्द्धते कृशा गौः कपिला गौः गोर्जनिर्त गौः प्रसूतदत्यादिव्यवहाराणां व्यक्तावेव सम्भवात् समासः सम्यगासनं सम्बन्धोनुबन्धइत्यर्थे गौराखे गोर्मुख मित्युदाहरणीयं ॥ १२५ ॥

तद्दूषयति ।

तदनवस्थानात् ॥ १२६ ॥

न व्यक्तौ शक्तिर्व्यक्तिमात्रस्यानवस्थानात् अव्यवस्थानात् ॥१२६॥

व्यक्तिमात्रस्य शक्यत्वे हि गवादिपदाद्यत्किञ्चिद्व्यक्तेरुप स्थितिः स्यादतोगोत्वविशिष्टाव्यक्तिर्वाच्या तथाच नागृहीत विशेषणान्यायात् जातावेव शक्तिरस्तु कथं तर्हि व्यक्तिबोध इत्यशिमसूत्रं ।

सहचरणस्थानतादर्थ्यवृत्तमानधारण सामीप्ययोगसाधनाधिपत्येभ्योब्राह्मण मञ्चकटराजशक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावेपि तदुपचारः ॥ १२७ ॥

अतद्भावेपि तत्पदाशक्यत्वेपि तदुपचारः तच्छब्दव्यपदेशो यथा सहचरणादितोब्राह्मणादौ यष्ट्यादिपदप्रयोगः सह

२ अध्याय; चरणात्संयोगविशेषाद्यष्टिं भोजयेत्यत्र यष्टिधरब्राह्मणे यष्टिशब्दप्रयोग एवं स्थानान्मञ्चाः क्रोशन्तीति मञ्चस्थपुरुषे तादर्थ्यात्कटं करोतीति कटार्थैकवीरणे कटशब्दाभिहलेन कारकत्वायोगात् यमस्य वृत्तादनुशासनादितो राजनि यम इति मानात् आढकेन मिताः शक्तव आढकशक्तव इति धारणात्तु लया धृतं चन्दनं तुलाचन्दनमिति सामीप्याद्गङ्गायां गावश्चरन्तीति कृष्णद्रव्ययोगात् शकटे कृष्णः शकट इत्युदाहरणीयं प्राणसाधनादन्नं प्राण इति आधिपत्याद्राजैवास्य कुलमिति कुलाधिपतिः प्रतीयते तथाच यथा गङ्गादिपदाद्गङ्गातीरत्वादिना बोधस्तथा गोपदादितो गोत्वविशिष्टस्य लक्षणया बोध एतेन युगपद्वृत्तिद्वयविरोध एकपदार्थयोः परस्परानन्वयश्च प्रत्युक्तः गोत्वत्वेन रूपेण शक्तिग्रहात्तथैवोपस्थितेरतो निष्प्रकारकपदार्थोपस्थितिरपि नास्तीति मन्तव्यं ॥ १२७ ॥

आकृतिरेव शक्येति मतमुपन्यस्यति ।

आकृतिस्तदपेक्षत्वात्सत्त्वव्यवस्थानसिद्धेः ॥ १२८ ॥

आकृतिः पदार्थः कुतः सत्त्वस्य प्राणिनो गवादेर्व्यवस्थानसिद्धेर्व्यवस्थितत्वसिद्धेस्तदपेक्षत्वादाकृत्यपेक्षत्वादयमश्वो गौरयमित्यादिव्यवहारस्याकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः ॥ १२८ ॥

फलतस्तद्दूषयति । 

व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात्प्रोक्षणादीनां मृद्गवके जातिः ॥ १२९ ॥

मृद्गवके व्यक्त्याकृतियुक्तेपि प्रोक्षणादीनामप्रसङ्गात्तज्जातिः पदार्थ इतरथा मृद्गवकस्यापि व्यक्तित्वाद्गवाकृतिसत्त्वाच्च वैध प्रोक्षणादिप्रसङ्गादिति भावः ॥ १२९ ॥

केवलव्यक्त्याकृतिशक्तिपक्षं निराकृत्य केवलजातिशक्तिपक्षं निराकरोति ।

नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ १३० ॥

न जातिमात्रं पदार्थः जात्यभिव्यक्तेर्जातिशाब्दबोधस्य आकृतिव्यक्त्यपेक्षत्वादाकृतिव्यक्तिविषयकत्वनियमात्तयोरपि वाच्यत्वमावश्यकं शक्तिं विना तज्ज्ञानासम्भवात् न च गोत्व प्रकारकताद‍ृशाकृतिविशिष्टशाब्दत्वस्य कार्य्यतावच्छेदकत्वात्त ज्ज्ञानमिति वाच्यं तथासति गवादिपदस्य घटत्वादावपि शक्ति प्रसङ्गस्तस्मात्पदं स्ववाच्यमेवोपस्थापयति ॥ १३० ॥

इत्थञ्च त्रयाणामपि वाच्यत्वं सिद्धमित्याह ।

जात्याकृतिव्यक्तयस्तु पदार्थः ॥ १३१ ॥

तुशब्देनैकैकमात्रपदार्थत्वव्यवच्छेदः पदार्थ इत्येकवचनन्तु

२ अध्यायः तिसृष्वप्येकैव शक्तिरिति सूचनाय विभिन्नशक्तौ कदाचित्कस्य चिदुपस्थितिः स्यात् शक्तेस्त्रयमपि व्यक्तेर्विशेष्यत्वात् प्राधान्यं तथैव शक्तिग्रहात् नचाकृत्यादिसाधारणशक्यतावच्छेदका भावान्न शक्त्यैक्यमिति वाच्यं तथा नियमे मानाभावात् इदं गवादिपदमभिप्रेत्य तेन पश्वादिपदस्य जात्यवाचकत्वेपि न क्षतिः जातिपदं वा धर्मपरं तथैव लक्षणस्य वक्ष्यमाणत्वात् ॥ १३१ ॥

तत्र के व्यक्त्यादय इत्याकाङ्क्षायामाह ।

व्यक्तिर्गुणविशेषाश्रयोमूर्त्तिः ॥ १३२ ॥

यद्यपि जात्यादेरपि व्यक्तित्वात् प्रमेयत्वमेव व्यक्तित्वं तथापि जात्याकृतिशक्तिविषयव्यक्तेरिदं लक्षणं तथाच गुण विशेषोजात्याकृति समानाधिकरणोगुणः संख्यादिभिन्नस्तदा श्रयः मूर्त्तिर्व्यक्तिरिति समानार्थकमित्यर्थः परंतु गुणा रूपा दयः विशेषाविशेषकाः उत्क्षेपणादयस्तेषां आश्रयोद्रव्यं तेन जात्याश्रयोव्यक्तिरित्याशयः विशेषलक्षणमाह मूर्त्तिरिति मूर्त्तिः संस्थानविशेषस्तदानित्याङ्गः अत्रच मध्यपदलोपी समास इत्याशयः अन्येतु व्यक्तेर्लक्षणं मूर्त्तिरिति सैव केत्याह गुणविशेषाश्रय इति गुणविशेषस्यावच्छिन्नपरिमाणस्याश्रय द्रव्यम् इत्याहुः ॥ १३२ ॥

आकृतिं लक्षयति।

आकृतिर्जातिलिङ्गाख्या ॥ १३३ ॥

जातिलिङ्गमित्याख्या यस्याजातेर्गोत्वादेर्हि सास्नादिसं स्थानविशेषोलिङ्गं तस्य च परम्परया द्रव्यवृत्तित्वं जातिर्द्रव्या समवायिकारणतावच्छेदिका लिङ्गं धर्मोयस्याःसेत्यर्थइति कश्चित् ॥ १३३ ॥

जातिं लक्षयति।

समानप्रसवात्मिकाजातिः ॥ १३४ ॥

समानः समानाकारकः प्रसवोबुद्धिजननं आत्मा स्वरूपं यस्या सा तथाच समानाकारबुद्धिजननयोग्यत्वमर्थः समानाकारबुद्धिजननयोग्यधर्मविशेषोनित्यानेकसमवेतत्वरूपार्थ इत्यपि वदन्ति इदन्तु बोध्यं एवं सत्याकृत्यविषयकोगवादिपदात् शाब्दबोधः अनुभवेपि तथैव कार्य्यकारणभावकल्पना ह्निपदस्य गोत्वविशिष्टे शक्तिरेव स्यादिति ॥ १३४ ॥

समाप्तं शब्दशक्तिपरीक्षाप्रकरणं ॥ २३ ॥

द्वितीयाध्यायस्य द्वितीयमाह्निकञ्च ॥ २ ॥ विभागपरीक्षाद्वारकशाब्दप्रमाणपरीक्षणं नाम। इति श्रीविश्वनाथभट्टाचार्य्यकृता न्यायसूत्रवृत्तौ द्वितीयाध्यायवृत्तिः समाप्ता ॥ २ ॥

३ अध्यायः नरप्रभृतितुल्यताभवति यत्कृपामन्तरा यदीयकरुणा कणात्तरति मोहजालं जनः। विधाय हृदयाम्बुजे रुचिरवाक् प्रचाराय तां नमामि परदेवतां सततमेव वाणीमहं। अथाव सरतः प्रमेयेषु परीक्षणीयेषु प्रथमोद्दिष्टमात्मादिषट्कं तृतीये परीक्षणीयं तेनात्मादिषट्कं परीक्षैवाध्यायार्थः तत्रा त्मादिचतुष्कपरीक्षा प्रथमाह्निकार्थः तत्र च नवप्रकरणानि तत्रादाविन्द्रियभेदप्रकरणं तत्रेन्द्रियं ज्ञानवच्चेति संशये करणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात्तथा चात्मशब्दस्य नानार्थत्वादिन्द्रियानामभौतिकत्वाद्वा न साङ्क र्य्यमितीन्द्रियचैतन्यवादिनस्तन्निराकरणाय सूत्रं।

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥

एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात् दर्शनस्पर्शने ज्ञानविशेषौ तृतीया च प्रकारे तेन चाक्षुषस्पार्शनोभयवत्त्वेनै कस्य धर्मिणः प्रतिसन्धानादित्यर्थः तथाच योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यनुभवादात्मेन्द्रियव्यतिरिक्त एक इति ॥ १ ॥

अत्र प्रत्यवतिष्ठते।

नविषयव्यवस्थानात् ॥ २ ॥

चक्षुस्त्वगादीनां रूपस्पर्शादिवन्नियतविषयत्वाच्चक्षुरादेश्चाक्षुषादिसमवायित्वमित्यस्याभेदप्रत्ययोभ्रान्तइति भावः ॥ २ ॥

समाधत्ते।

तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥

उक्तप्रतिषेधोन युक्तः उक्तविषयव्यवस्थानादेवात्मसद्भावादतिरिक्तात्मकल्पनादित्यर्थः अयंभावः तत्तदिन्द्रियाणां तत्तद्विषयकप्रत्यक्षं प्रति समवायित्वं वाच्यं नतु प्रत्यक्षत्वावच्छिन्नं प्रति अनुमित्यादिजनकत्वे तु विनिगमकाभावः तेन अन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्मत्वं चक्षुरादेरनित्यत्वादात्मनश्च नित्यतायावक्ष्यमाणत्वाच्चक्षुरादिनाशेपि स्मरणाच्चक्षुरन्धमित्याद्यप्रतीतेश्च नेन्द्रियात्मवादोयुज्यतइति ॥ ३ ॥

समाप्तमिन्द्रियभेदप्रकरणं। ॥ १४ ॥

ननु गौरोऽहं जानामीत्यादिप्रतीतेरस्तु शरीरमात्मेत्याशङ्क्य दूषयति।

३ अध्यायः

शरीरदाहे पातकाभावात् ॥ ४ ॥

पातकाभावात् पातकादेरभावप्रसङ्गात् तथाचोत्तरकालिकं दुःखादिकं न स्यादिति यद्वा दाहो नाशः तथाच शरीरनाशे कृते कर्त्तरि शरीरे विनष्टे पातकं न स्यादित्यर्थः। यद्यपि भूतचैतन्यवादिना पातकादिकं नोपेयते तथापि तस्य प्रसाध्याङ्गत्वादेकदेशिनः पूर्व्वपक्षित्वाद्वा न दोष इति भावः ॥ ४ ॥

तत्रापि तुल्यदोष इत्याशङ्कते।

तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥

तदभावः पातकाभावः सात्मकशरीरस्य प्रदाहेऽपि प्रसक्तः तन्नित्यत्वात् तस्य आत्मनो नित्यत्वात् नित्यत्वेन निर्विकारत्वं तेन जन्यधर्म्मानाश्रयत्वमभिमतमिति केचित् तन्नित्यत्वात् शरीरनाशे शरीरविशिष्टात्मनाशस्य नियतत्वादित्यपि कश्चित् किञ्च सात्मकशरीरनाशेऽपि हन्तुः पातकाभावः स्यात् तस्यात्मनो नित्यत्वेन तन्नाशकत्वाभावात् ॥ ५ ॥

परिहरति।

न कार्य्याश्रयकर्तृवधात् ॥ ६ ॥

कार्य्याश्रयस्य चेष्टाश्रयस्य कर्त्तुः कृत्यवच्छेदकस्य शरीरस्यैव

नाशेन तात्मनदति न पातकाभावः यद्वा न हन्तुः पात ३ अध्यायः
काभावः कार्य्याश्रयकर्त्तृब्बाधात् शरीरस्य नाशात् शाह्मण
त्वादेः शरीरवृत्तित्वात्तन्नाशादेव पापोत्पत्तिरिति भावः
वस्तुतस्तु पूर्व्वशरीरावच्छिन्न प्राणविनाशिनोबन्धनमुखनिरो
धादेर्हिंसात्वं न स्यात् पातकानभ्युपगन्तृचार्व्वाकादिमते
शरीरभेदसाधनन्तु वक्ष्यमाणयुक्तिभिरिति ध्येयं ॥ ६ ॥

समाप्तं देहभेदप्रकरणं ॥ २५ ॥

प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते।

## सव्येनदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥

वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात्
स्थिरात्मसिद्धिरिति केषाञ्चिन्मतं तन्निराकरणायैतदुप
न्यासः ॥ ७ ॥

एतद्दूषयति।

## नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥

मध्यस्थसेतुना तडागस्येव नासास्थिव्यवहितगोलकान्त
रावच्छिन्नतया द्वैतप्रत्ययोभ्रम इत्यर्थः ॥ ८ ॥

आक्षिपति ।

एकनाशे द्वितीयाविनाशात् ॥ ९ ॥

चक्षुरैक्ये एक चक्षुर्नाशे ऽन्धत्वं स्यादिति भावः ॥ ९ ॥

अत्रैकदेशी परिहरति ।

अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥

अवयवस्य शाखादेर्नाशेऽप्यवयविनो वृक्षस्य प्रत्यभिज्ञाना न्नावयवनाशे सर्व्वत्रावयविनाशनियमस्तथा चैकनाशेऽपि नान्ध त्वमिति ॥ १० ॥

एकदेशिमतस्य पूर्व्वाक्षेपस्य च समाधानाय सिद्धान्तिनः सूत्रं ।

दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

उक्तप्रतिषेधो न युक्तः दृष्टान्तस्य विरोधादयुक्तत्वात् न हि शाखाच्छेदे वृक्षस्तिष्ठति तथा सति वृक्षस्यानाशप्रत्यक्षादंता वस्थितावयवैस्तत्र खण्डवृक्षोत्पत्तेर्नैकदेशिमतं युक्तं एतेनैक नाशे द्वितीयाविनाशाद्भेदसाधनमपि प्रत्युक्तं चक्षुर्नाशेपि अवशिष्टावयवैः खण्डचक्षुः सम्भवात् इत्यत्र स्वाप याभ्युपगमेनेति टीकाकारस्वरसिद्धं परंतु चक्षुर्द्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते सिद्धान्तिनः सूत्रमथेति प्रकृते नैक देशिमतं समाधत्ते एकेतिप्रकृते अवयवेति निराकरोति

दृष्टान्तेति शाखानामो दूषनाभावश्यकत्वात् दृष्टान्तोन युक्तः इ अध्यायः यद्वा दृष्टान्तस्य गोलकभेदविरोधादन्यथा उपपन्नत्वा दृष्टं हि मृतस्य चक्षुरधिष्ठानगोलकद्वयंभेदेनैवोपलभ्यत इति वदन्ति ॥ ११ ॥

आत्मन इन्द्रियभेदे युक्त्यन्तरमाह ।

इन्द्रियान्तरविकारात् ॥ १२ ॥

चिरविल्वाद्यम्लद्रव्ये दृष्टे तद्रसस्मरणाद्दन्तोदकसंप्लवरूप रसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिद्ध्यति ॥ १२ ॥

आक्षिपति ।

न स्मृतेः स्मर्त्तव्यविषयत्वात् ॥ १३ ॥

स्मृतिर्हि स्मर्त्तव्यविषयिणीति नियमस्तस्याश्च दर्शनादिना सामानाधिकरण्ये मानाभावात् अस्तु वा विषयतयैव सामाना धिकरण्यमिति भावः ॥ १३ ॥

समाधत्ते ।

तदात्मगुणत्वसद्भावादप्रतिषेधः ॥ १४ ॥

उक्तप्रतिषेधोऽयुक्तः धर्मिग्राहकमानेन स्मृतेरात्मगुणत्वा त्परिशेषेणात्मगुणत्वसिद्धेरहं स्मरामीत्यनुभवात् विषयनिष्ठ

३ अध्यायः कार्य्यकारणभावे चैत्रस्य ज्ञानान्मैत्रस्य स्मरणापत्तेरिति भावः ॥ १४ ॥

विषयाणां स्मर्त्तव्यानां स्मृतिसमवायित्वं स्यादित्याशङ्क्य समाधत्ते।

अपरि सङ्ख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥

अपरिसङ्ख्यानात् आनन्त्यात् तथाच लाघवादतिरिक्तात्मसिद्धिः इदं न सूत्रं किन्तु भाष्यमितिकेचित् ॥ १५ ॥

समाप्तं चक्षुरद्वैतप्रकरणं ॥ २६ ॥

ननु मनसोनित्यत्वादात्मत्वमस्त्वित्याशङ्कते।

नात्मप्रतिपत्तिहेतूनां मनसिसम्भवात् ॥ १६ ॥

नातिरिक्तआत्मा आत्मसाधकमानानां मनसार्थान्तरमितिभावः ॥ १६ ॥

समाधत्ते।

ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रं ॥ १७ ॥

यदिमनसोआत्मत्वं तदा व्यासङ्गाद्युपपादनाय करणान्तर[illegible]मावश्यं तथा चैकोज्ञाता ज्ञानसाधनं चैकं सिद्धं मन आत्मास्त्विति संज्ञामात्रं किञ्च व्यासङ्गोपपादकतया मनसो

ऽणुत्वं सिद्धमात्मनश्च प्रत्यक्षोपपादकतया महत्त्वमिति भेद २ अध्याहः आवश्यकइति भावः ॥ १७ ॥

ननु रूपादिप्रत्यक्षं सकरणकमस्तु न तु सुखादिप्रत्यक्षं एवंपरमाण्वन्तरस्यातीन्द्रियत्वेपि मनसः प्रत्यक्षं स्यादत आह ।

नियमश्च निरनुमानः ॥ १८ ॥

उक्तो नियमविशेषो निरनुमानः निष्प्रमाणकः गौरवाद्वैपरीत्ये च विनिगमकाभावाच्चेति भावः ॥ १८ ॥

समाप्तं मनोभेदप्रकरणं ॥ २७ ॥

एवं साधितेपि देहादिभिन्ने आत्मनि विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिरतः आत्मनित्यताप्रतिपादनाय सूत्रं ।

पूर्व्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥ १९ ॥

जातस्य बालस्य एतज्जन्माननुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां सम्प्रतिपत्तिः उत्पत्तिस्तस्याः पूर्व्वपूर्व्वानुभवाधीनस्मृतिसम्बन्धादेव सम्भवात् इत्थं चैतदानीन्तनस्यात्मनः पूर्व्वपूर्व्वसिद्धौ तस्यानादित्वमनादेश्च भावस्य न नाशइति नित्यत्वसिद्धिरिति भावः ॥ १९ ॥

अत्र शङ्कते।

पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः ॥२०॥

बालस्य हर्षादयो मुखविकासाद्यनुमेया न च तत्सम्भवः पद्मादीनां प्रबोधादिवदहष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरितिभावः ॥ २० ॥

सिद्धान्तसूत्रं।

नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणां ॥ २१ ॥

उक्तं न युक्तं यतः पञ्चात्मकानां पाञ्चभौतिकानां पद्मादीनां ये विकारास्तेषां उष्णकालादिनिमित्तत्वात् मनुष्यादीनान्तु हर्षादिनिमित्तकामुखविकासादयइति न तुल्यतेति भावः ॥ २१ ॥

आत्मनित्यत्वे हेत्वन्तरमाह।

प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥

प्रेत्य मृत्वा जातमात्रस्य यः स्तन्याभिलाषः सतावदाहाराभ्यासजनितः जन्मान्तरीणाहारेष्टसाधनताधीजन्यजीवनादृष्टोद्बोधितसंस्काराधीनेष्टसाधनतास्मरणेन हि बालःस्तनपानेप्रवर्त्तत इत्यनादित्वमिति ॥ २२ ॥

प्रकृते।

अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणं ॥ २३ ॥

यथायस्कान्तसन्निधि तस्यायसोऽयस्कान्ताभिमुखतया गमनं तथैव वत्सस्यापि स्तनोपसर्पणं न लिङ्गम्। धनताज्ञानाधीनप्रवृत्तिजन्यचेष्टेयमित्यर्थः ॥ २३ ॥

समाधत्ते।

नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥

स्तनपान एव बालः प्रवर्त्तते न त्वन्यत्रेति नियमः कथं स्यात् वस्तुतस्तु अन्यत्र अयसि प्रवृत्त्यभावात् प्रवृत्तिर्हि चेष्टानुमिता लिङ्गं न तु क्रियामात्रमतोन व्यभिचार इति भावः ॥ २४ ॥

हेत्वन्तरमाह।

वीतरागजन्मादर्शनात् ॥ २५ ॥

वीतरागो रागशून्यस्तावन्नोत्पद्यतेऽपितु सरागस्तेन च जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाषउक्तः सम्प्रतितु पतगादीनां कणादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौनरुक्त्यं ॥ २५ ॥

प्रकृते।

सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥ २६ ॥

द्रव्यस्य घटादेर्यथा सगुणस्य रूपादिविशिष्टस्योत्पत्तिर्यथा घटादिः स्वतएव रूपादिमान्भवति तथैवात्मापि स्वतएव सरागोभवतीत्यप्रयोजकत्वं त्वदीयहेतूनामिति भावः ॥ २६ ॥

समाधत्ते।

नसङ्कल्पनिमित्तत्वाद्रागादीनां ॥ २७ ॥

सङ्कल्पोज्ञानमिष्टसाधनताज्ञानं इतियावत् तन्निमित्तका हि रागादय स्तथा चेष्टसाधनताज्ञानत्वेनेच्छात्वादिना कार्य्यकारणभावात् प्रवृत्तित्वेन चेष्टात्वेन च कार्य्यकारणभावान्नाप्रयोजकत्व मितिभावः ॥ २७ ॥

समाप्त मनादिनिधनप्रकरणं ॥ २८ ॥

क्रमप्राप्ते शरीरपरीक्षणे मानुषादिशरीरं पाञ्चभौतिक मित्येके तत्र सिद्धान्तसूत्रं।

पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

मानुषादिशरीरं पार्थिवं पृथिवीसमवायिकारणकं गुणान्तरस्य गन्धनीलादिरूपकाठिन्यादेरुपलब्धेरिति ॥ २८ ॥

पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २९ ॥

निश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकं ॥ ३० ॥

गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं ॥ ३१ ॥

तद्गुणानां पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्णस्पर्शानामुपलब्धेः एतावता त्रिभौतिकत्वे सिद्धे निःश्वासादितश्चातुर्भौतिकत्वं निःश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषा क्लेदोजलविशेषोजलविशिष्टपृथिवीत्युभयथापि जलमावश्यकं पाकस्य तेजः संयोगाधीनत्वात्तेजः सिद्धिर्व्यूहोनिःश्वासादिः अवकाशदानं छिद्रं एतानि मतानि सूचकता तुच्छत्वान्न दूषितानि तथाहि एकस्मिन् शरीरे पृथिवीत्वादिनानाजातेः सङ्करापत्तेरसम्भवात् नवा नानोपादानकत्वं विजातीयानामनारम्भकत्वात् तथात्वेवा जलाद्यारब्धस्य न पृथिवीत्वं व्यभिचारात् नवा चित्रद्रव्यं गन्धवत्त्वविरोधात् गन्धादीनामानाशमनपायाच्च पार्थिवत्वमित्युक्तप्रायं यदा पार्थिवत्वे कथं जलादिसम्बन्ध इत्याशङ्कायां जलादिनिमित्तवशाच्चैभौतिकत्वादिव्यपदेश इत्याशयेन चिसूची ॥ २९ ॥ ३० ॥ ३१ ॥

पार्थिवत्वे युक्त्यन्तरमाह ।

॥ श्रुतिप्रामाण्याच्च ॥ ३२ ॥

सूर्य्यन्ते चक्षुः स्पृणोमीति मन्त्रान्ते पृथिव्यान्ते शरीरमित्य भिधानादेवं प्रकृतौ विकारस्य लयाभिधाने सूर्य्यन्ते चक्षुर्गच्छ तादिति मन्त्रान्ते पृथिव्यान्ते शरीरमिति इमां चतुःसूत्रीं केचन भाष्यतया वर्णयन्ति तन्न तथासत्येकसूत्रस्य प्रकरणत्वानुप पत्तेः अतएव चतुर्थं सूत्रमेवेत्यपरे अन्ये तूक्तयैवानुपपत्त्या आप्यतैजसवायव्यानि लोकान्तरशरीराणि तेष्वपि भूत संयोगः पुरुषार्थतन्त्र इति भाष्यं सूत्रतया वर्णयन्ति तदर्थस्तु आप्यादीनि लोकान्तरेषु वरुण लोकादिषु प्रसिद्धानि शरी राणि जलादिरूपत्वे कथमुपभोगक्षमतेत्यत्र तेष्वपीति भूत संयोगः पृथिव्युपष्टम्भः पुरुषार्थतन्त्र उपभोगसम्पादकः ॥ ३२ ॥

समाप्तं शरीरपरीक्षाप्रकरणं ॥ १८ ॥

अथेन्द्रियं परीक्षणीयं तत्र लक्षणसूत्रोक्त भौतिकत्वमि न्द्रियाणां परीक्षितुं संशयमाह ।

कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात्सं शयः ॥ ३३ ॥

कृष्णसारे चक्षुर्गोलके सति [illegible]भाद्गोलकमिन्द्रिय

त्वमिति बाह्याः व्यतिरिच्य विषयं प्राप्य उपलम्भात् उपलम्भ ३ अध्यायः जननाद्गोलकातिरिक्तानीत्यपरे तत्र इन्द्रियाणि गोलकाति रिक्तान्यभिन्नवेति संशयो गोलकातिरिक्तानीति नैयायिकादयः तत्राप्यभौतिकान्याहङ्कारिकाणीति सांख्याः भौतिकानीत्यपरे ॥ ३३ ॥

तत्र सांख्यमतेन बौद्धमतमुदस्यन्नाह ।

महदणुग्रहणात् ॥ ३४ ॥

गोलकं नेन्द्रियं अप्राप्यकारित्वेऽतिप्रसङ्गात् इत्यत्र गोलकातिरिक्तं भौतिकमिति वाच्यं तदप्यसङ्गतं चक्षुरादि न्यूनपरिमाणं महत्परिमाणञ्च गृह्यते नच न्यूनेन महतो व्यापनं सम्भवति नवाऽव्याप्यग्रहणमतोऽभौतिकानीन्द्रियाण्या हङ्कारिकाणीति ॥ ३४॥

सांख्यं निरस्यति ।

रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणं ॥ ३५ ॥

रश्मिर्गोलकावच्छिन्नं तेजः तेजोऽर्थस्य घटादेर्यः सन्निकर्षवि शेषः संयोगविशेषस्तस्मात् महदण्वोर्ग्रहणमुपपद्यते भौतिकेपि प्रदीपादौ महदणुप्रकाशकत्वं दृष्टं अभौतिकत्वे तु पुरः पश्चाद्वर्त्तिनां सर्व्वेषामेव ग्रहः स्यात् ॥ ३५ ॥

३ अध्यायः तैजसे चक्षुष्यनुपलब्धिबाधं बौद्धः शङ्कते।

तदनुपलब्धेरहेतुः ॥ ३६ ॥

रश्म्यर्थसन्निकर्षेण हेतुर्गोलकातिरिक्तस्य रश्मेरनुपलब्धेः ॥ ३६ ॥

समाधत्ते।

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभाव हेतुः ॥ ३७ ॥

रूपोपलब्धेः सकरणकत्वादिनानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिर्नाभावनिर्णायिकेत्यर्थः ॥ ३७ ॥

कथं तर्हि नोपलम्भ इत्यत आह।

द्रव्यगुणधर्म्मभेदाच्चोपलब्धिनियमः ॥ ३८ ॥

द्रव्यस्य धर्म्मभेदोमहत्त्वादिर्गुणस्य धर्म्मभेदः उद्भूतत्वं तदधीनत्वात् प्रत्यक्षस्य द्रव्यमात्रे उपलब्धेर्न नियमः यत्रोद्भूतरूपमहत्त्वादिकं तस्य प्रत्यक्षं तदभावाच्चक्षुरादेरप्रत्यक्षं ॥ ३८ ॥

चक्षुरादावुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यं।

कर्म्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३९ ॥

अदृष्टविशेषाधीन इन्द्रियाणां व्यूहो रचनाविशेष उपभोगसाधनमिति सूत्रमेवेदमिति केचित् ॥ ३९ ॥

महतोरूपवतोऽनुपलब्धौ दृष्टान्तमाह ।

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ४० ॥

महतोरूपवतश्चोल्काप्रकाशस्य सौरालोकेनाभिभवान्मध्यन्दिनेऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषोऽप्यनुपलब्धिः सम्भवतीति भावः ॥ ४० ॥

नन्वेवं घटादेरपि रश्मिः स्यात्सौरालोकेनाभिभवात्पुनरग्रहदित्यत आह ।

न रात्रावप्यनुपलब्धेः ॥ ४१ ॥

नेत्यस्य घटादौ रश्मिरिति शेषः ॥ ४१ ॥

नन्वनुद्भूतरूपत्वाच्चक्षुषोनुपलब्धिर्नत्वभिभवादित्यत्र किं विनिगमकमिति तटस्थाशङ्कायामाह ।

वाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोनुपलब्धिः ॥ ४२ ॥

अनभिव्यक्तितोऽनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धिः कुतः वाह्यप्रकाशानुग्रहात्सौरालोकादिसाहित्याद्विषयोपलब्धेः तथोद्भूतरूपत्वे वाह्यप्रकाशापेक्षा न स्यात् अभिभूतत्वे च तत्साहित्येनापि प्रत्यक्षजननं न स्यादभिभूतस्य कार्य्याक्षमत्वादिति भावः ॥ ४२ ॥

१ अध्यायः ननु चक्षुषोनाभिभवः किन्तु तद्रूपस्य तस्य च प्रत्यक्षजनकत्वे मानाभावः किञ्चाभिभवात्तस्य न प्रत्यक्षमितरप्रत्यक्षजनने च विरोधाभाव इत्याशङ्कायामाह ।

अभिव्यक्तौचाभिभवात् ॥ ४३ ॥

रूपस्य अभिव्यक्तौ प्रत्यक्षे उद्भूतत्वइति यावत् उद्भूतरूपस्य प्रत्यक्षाभावे ह्यभिभवकल्पना नत्वेवंप्रकृते सुवर्णादिवत्तस्यैदाभिभावकद्रव्यान्तरकल्पनेच गौरवमिति भावः ॥ ४३ ॥

चक्षुषि प्रमाणान्तरमाह ।

नक्तञ्चररश्मिदर्शनाच्च ॥ ४४ ॥

नक्तञ्चराणां वृषदंशादीनां गोलके रश्मिदर्शनात् तद्दृष्टान्तेन परेषामपि रश्म्यनुमानमिति भावः अन्यथा तमसि तस्य प्रत्यक्षं नस्यादिति हृदयं ॥ ४४ ॥

अप्राप्यकारित्वं चक्षुषः स्यादित्याशङ्कते ।

अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४५ ॥

समाधत्ते ।

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४६ ॥

[?]तु उक्तसूत्रस्य पूर्वपक्षपरत्वं मन्यमानस्य भाष्यकार

स्यावतारणिका अप्राप्यग्रहणमिति वस्तुतः सिद्धान्तसूत्रमेव २ अध्यायः तत्प्रदीपदृष्टान्तेन काचाद्यन्तरितप्रकाशकत्वेन तैजसत्वं सिध्यतीति नन्वप्राप्यकारित्वं किं न स्यादत्राह कुड्येति उक्तस्य तैजसत्वस्य प्रतिषेधायोगोऽलकात्मकत्वं न सम्भवति कुड्यान्तरितस्यानुपलब्धेरित्याहुः ॥ ४६ ॥

ननु कुड्यान्तरित इव काचान्तरितेऽपि सन्निकर्षो न सम्भवतीति कथं प्राप्यकारित्वमित्याशङ्कायामाह ।

अप्रतिघातात्सन्निकर्षोत्पत्तिः ॥ ४७ ॥

काचादिना स्वच्छद्रव्येणाप्रतिघातादप्रतिबन्धात्सन्निकर्ष उपपद्यत इति भावः ॥ ४७ ॥

तत्र दृष्टान्तमाह ।

आदित्यरश्मेःस्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४८ ॥

दाह्यइति वस्तुमात्रोपलक्षणं परेतु दाह्ये कृशानादौ सङ्कादेरविघातपरं तदित्याहुः ॥ ४८ ॥

आक्षिपति ।

नेतरेतरधर्म्मप्रसङ्गात् ॥ ४९ ॥

अप्रतिघातेन युक्तइतरस्य स्फटिकादेरितरस्य कुड्यादे

द्रव्यत्वाय: सौधर्म्यः प्रतिघातकत्वं तत्सद्भावात् स्फटिकादिकमपि कुड्यादि वत्प्रतिबन्धकं भवेदित्यर्थः ॥ ४९ ॥

समाधत्ते ।

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धि वत्तदुपलब्धिः ॥ ५० ॥

आदर्शे उदके च प्रसादस्वाभाव्यात्स्वच्छस्वभावत्वात् मुखा दिरूपोपलब्धिर्न तु भित्त्यादावेवं स्फटिकाद्यन्तरितस्योपलब्धि र्न तु कुड्याद्यन्तरितस्येति स्वाभाव्यान्न दोषः एतेन वस्त्रादर्घ टादिनाऽप्रतिघातवच्चक्षुषोऽपि प्रतिघातेन स्यादिति प्रत्युक्तं वस्त्राद्यप्रतिबन्धेऽपि दीपालोकादेः प्रतिबन्धवत्सम्भवादिति भावः ॥ ५० ॥

चक्षुषस्ताद्दृशत्वकल्पने किंमानमित्यत्राह ।

दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥ ५१ ॥

हि यस्मात् दृष्टानामनुमितानां वा पदार्थानां दृष्टेनानु मितानामिति वार्थः तेषामेवं भवितेति नियोगएव माभ वितेति प्रतिषेधोवा नोपपद्यते युक्त्यनुसारिणीहि कल्पनेति भावः ॥ ५१ ॥

समाप्तमिन्द्रियपरीक्षाप्रकरणं ॥ १० ॥

दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यते इत्यु ह प्रथ्याचः पोह्यातेनेन्द्रियनानात्वं परीक्षणीयं तत्र संशयमाह ।

स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५२ ॥

स्थानान्यत्वे स्थानभेदे घटपटादीनां नानात्वदर्शनान्नाना वयवस्थितस्यावयविन एकत्वदर्शनाच्च इन्द्रियाणां नानात्वमेकत्वं वेति संशयः ॥ ५२ ॥

पूर्व्वपक्षसूत्रं ।

त्वगव्यतिरेकात् ॥ ५३ ॥

सर्व्वेष्विन्द्रियप्रदेशेष्वव्यतिरेकात् सत्त्वात्त्वगेवैकमिन्द्रियमस्तु ॥ ५३ ॥

उत्तरयति ।

न युगपदर्थानुपलब्धेः ॥ ५४ ॥

युगपत् एकदा अर्थानां गन्धरूपादीनां अनुपलब्धेर्न त्वगेवैकमिन्द्रियं अन्यथा तस्य व्यापकत्वाच्चाक्षुषादिकाले घ्राणजादिकमपि स्यादिति भावः ॥ ५४ ॥

इन्द्रियाणां नानात्वे कार्यभेदमानमाह ।

इन्द्रियार्थपञ्चत्वात् ॥ ५५ ॥

इन्द्रियार्थानामिन्द्रियग्राह्याणां रूपादीनां पञ्चत्वात् पञ्चविधत्वात् रूपादीनां हि चक्षुराद्येकैकेन्द्रियमात्रग्राह्यत्वा द्वैलक्षण्यं तच्चैकेन्द्रियपक्षे न सम्भवति गन्धादीनां रूपाद्युप लब्धिप्रसङ्गश्चेति भावः ॥ ५५ ॥

शङ्कते ।

न तदर्थबहुत्वात् ॥ ५६ ॥

इन्द्रियार्थानां नीलपीतादीनां बहुत्वादिन्द्रियाणां बहु तरत्वप्रसङ्गादिन्द्रियार्थपञ्चत्वादिन्द्रियभेदोन युक्तः ॥ ५६ ॥

समाधत्ते ।

गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५७ ॥

उक्तप्रतिषेधेन गन्धादीनां सौरभादीनां गन्धत्वाद्यव्यति रेकाद्गन्धत्वादिसत्त्वात् तथाच विभाजकगन्धत्वावच्छिन्नग्रा हकत्वमभिप्रेतं न तु वान्तरधर्मावच्छिन्नग्राहकत्वमिति भावः ॥ ५७ ॥

यदि गन्धत्वादिना सुरभ्यादीनामैक्यं तदा विषयत्वेन ३ अध्याय गन्धरसादीनामप्यैक्यादिन्द्रियैक्यं स्यादिति।

मन्यते।

विषयत्वाव्यतिरेकादेकत्वं ॥ ५८ ॥

विषयत्वाव्यतिरेकाद्विषयत्वेनैक्यात् ॥ ५८ ॥

उत्तरयति।

न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ५९ ॥

इन्द्रियाणामैक्यं न हेतुमाह बुद्धीत्यादि बुद्धेश्चाक्षुषादेर्य्य लक्षणं चाक्षुषत्वादि तत्पञ्चत्वेन तदवच्छिन्नकरणानां पञ्चत्वं एवमधिष्ठानं रूपादिर्विषयस्तत्पञ्चत्वात् गतिः दूरादौ गमनं इदं चक्षुरधिकृत्य यद्वा गतिः प्रकारस्तथाच प्रकाराणां पञ्च त्वात् चक्षुर्हि गत्वा गृह्णाति त्वग्देहावच्छेदेन श्रोत्रं कर्णावच्छेदेने त्यादिप्रकारभेदात् आकृतिर्गोलकानां संस्थानविशेषः जातिः पृथिवीत्वादि वस्तुतोजातिः धर्मस्तेन श्रोत्रत्वसंग्रहः ॥ ५९ ॥

घ्राणादेः पृथिवीत्वादिसत्त्वे मानमाह।

भूतगुणविशेषोपलब्धेस्तादात्म्यं ॥ ६० ॥

भूतानां पृथिव्यादीनां ये गुणविशेषा गन्धादयस्तदुपलम्भ

३ अध्यायः कत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिदृष्टान्तेन पृथिवीत्वादि साधनमिति भावः॥ ६०॥

समाप्तमिन्द्रियनानात्वप्रकरणं ॥ २१ ॥

क्रमप्राप्तार्थपरीक्षणाय सिद्धान्तसूत्रं॥

गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्य्यन्ताः पृथिव्याः अप्तेजोवायूनां पूर्व्वं पूर्व्वमपोह्याकाशस्योत्तरः॥ ६१॥

स्पर्शपर्य्यन्तेषु मध्ये पूर्व्वं पूर्व्वं त्यक्त्वा अप्तेजोवायूनां गुणा ज्ञातव्याः उत्तरः शब्द आकाशस्य गुणः तथा च स्पर्शान्ताः पृथिव्या रसरूपस्पर्शा जलस्य रूपस्पर्शौ तेजसः स्पर्शो वायोः शब्द आकाशस्य ॥ ६१॥

आक्षिपति।

न सर्व्वगुणानुपलब्धेः॥ ६२॥

उक्तो गुणनियमो न युक्तः पृथिव्यादेर्गुणत्वाभिमतानां सर्व्वेषां घ्राणादिग्राह्यत्वाभावात् पार्थिवत्वादिकं घ्राणेन पृथिव्या रसाद्यग्रहणात् बहिरिन्द्रियाणां स्वप्रकृतिवृत्तियोग्याशेषगुणग्राहकत्वनियमो युक्त इति भावः॥ ६२॥

इत्यञ्च पृथिव्यादावुपलभ्यमानानां रसादीनां कागति ? अध्याय: रित्यत्र स्वमतमाह ।

एकैकस्यैवोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥ ६३ ॥

उत्तरोत्तराणां अवादीनां एकैकस्यैव एकैकक्रमेण तदुत्तरोत्तरगुणसद्भावात् रसादिगुणसद्भावात् तदनुपलब्धिस्तेषां रसादीनां घ्राणादिनानुपलब्धिरित्यर्थ. ॥ ६३ ॥

तर्हि कथं पृथिव्यादौ रसादिग्रहणं तत्राह ।

संसर्गाच्चानेकगुणग्रहणं विष्टंह्यपरम्परेण ॥ ६४ ॥

अपरं पृथिव्यादि परेण जलादिना हि यस्मात् विष्टं सम्बद्धं तथाच पृथिव्याद्यवच्छिन्नजलादिना रसनासंयोगाद्रसादिग्रह इति भावः ॥ ६४ ॥

सिद्धान्तसूत्रं ।

न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६५ ॥

उक्तोगुणनियमोन युक्तः कुतः पार्थिवस्याप्यस्य च द्रव्यस्य प्रत्यक्षत्वाद्रूपस्पर्शसिद्धेस्तस्य रूपस्पर्शे गृह्यते चक्षुषा त्वचाच ग्रहणं न स्याद्रूपादेश्च क्वचित्साक्षात्सम्बन्धेन क्वचिच्च परम्परया हेतुत्वे गौरवमिति भावः ॥ ६५ ॥

३ अध्याय: रसादेः पृथिव्यादिगुणत्वेघ्राणादिनापि तद्ग्रहणप्रसङ्ग इत्यत्र नियामकमाह ।

पूर्व्वपूर्व्वंगुणोत्कर्षात्तत्तत्प्रधानं ॥ ६६ ॥

पूर्व्वंपूर्व्वं घ्राणादितत्तत्प्रधानं गन्धादिप्रधानं प्राधान्ये बीजमाह गुणोत्कर्षाद्गुणस्य गन्धादेरुत्कर्षात्तद्व्यवस्थापकत्वात् तथा च गन्धादिषुमध्ये स्वव्यवस्थापकगुणस्यैव ग्राहकत्वं घ्राणादीनामिति ॥ ६६ ॥

ननु पृथिव्यन्तरस्यापि गन्धप्राधान्यात्किमिन्द्रियं किमनिन्द्रियमित्यत्राह ।

तद्व्यवस्थानन्तु भूयस्त्वात् ॥ ६७॥

भूयस्त्वात् अन्नाद्यविशिष्टपृथिव्याद्यारब्धत्वात्तद्व्यवस्थानं घ्राणादीन्द्रियत्वव्यवस्थितिः ॥ ६७ ॥

घ्राणादीनां गन्धादिगुणवत्त्वेमानमाह ।

सगुणानामिन्द्रियभावात् ॥ ६८ ॥

सगुणानां गन्धादिविशिष्टानां घ्राणादीनामिन्द्रियभावात् गन्धादिसाक्षात्कारकारणत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादौ तथैव दर्शनात् ॥ ६८ ॥

इत्यत्र गन्धादिसिद्धावप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्या ह ग्रथ्याय-
शयेनाह।

तेनैव तस्याग्रहणाच्च ॥ ६९ ॥

तेन इन्द्रियेण तस्य स्वगुणस्येन्द्रियस्याग्रहणादनुद्भूतत्वक
ल्पनमिति ॥ ६९ ॥

नन्विन्द्रियगुणानामप्रत्यक्षत्वनियमो नेत्याशङ्कते।

न शब्दगुणोपलब्धेः ॥ ७० ॥

उक्तनियमो न युक्तः शब्दस्य श्रोत्रगुणस्योपलब्धेः ॥ ७० ॥

समाधत्ते।

तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७१ ॥

द्रव्यगुणानां रूपशब्दादीनां परस्परं वैधर्म्याच्छब्दस्योप
लब्धिर्न चक्षूरूपादीनां शब्दाश्रयस्य लाघवेनैक्यसिद्धेरिति
भावः ॥ ७१ ॥

समाप्तमर्थपरीक्षाप्रकरणं ॥ १२ ॥

इतितृतीयाध्यायस्याद्यमाह्निकं आत्मादिप्रमेयचतुष्कप
रीक्षणं नाम ॥

३ अध्यायः अर्थक्रमप्राप्ततया बुद्धेर्मनसश्च परीक्षासप्तभिः प्रकरणैस्त त्परीक्षैवचाङ्गिकार्य्यं. परन्तु शरीरावच्छेदव्याप्यभोगानुकूल सम्बन्धवत्परीक्षा शरीरान्तर्वर्त्तिप्रमेय परीक्षेत्राङ्गिकार्य्यइति तदसत् इन्द्रियपरीक्षायामतिव्याप्तेः तत्र च बुद्धिपरीक्षा पञ्चभिः प्रकरणैः तत्रादौ बुद्ध्यनित्यताप्रकरणं तत्र संशय दर्शनाय सूत्रं।

## कर्म्माकाशसाधर्म्यात्संशयः ॥ ७२ ॥

कर्म्मणश्चाकाशस्य च साधर्म्यान्निःस्पर्शत्वाद्बुद्धिपदार्थे नित्य त्वसंशयः बुद्धिपदं नित्यमुत नवेति संशयपर्य्यवसन्नः ॥ ७२ ॥

तत्र बुद्धिनित्यत्वं सांख्यः साधयति।

## विषयप्रत्यभिज्ञानात् ॥ ७२ ॥

बुद्धिर्न्नित्येति शेषः योहं घटमद्राक्षं सोहं घटं स्पृशामीति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयीकरोति नचात्मा तथा तस्य जन्यधर्म्मानधिकरणस्य कूटस्थत्वात् तस्माद्वृत्तिमत्. बुद्धि रेव वृत्तिस्तु तस्याः परिणामः बुद्धेरप्याविर्भावतिरोभावावेव बद्भूत्वादविनाशाविति ॥ ७३ ॥

परिहरति ।

साध्यसमत्वादहेतुः ॥ ७४ ॥

साध्यसमत्वात् असिद्धत्वात् प्रतिसन्धातृत्वं न हेतुः अहं जानामीत्यादिना आत्मनएव प्रतिसन्धातृप्रत्ययात् अनादिनिधनत्वमेव तस्य कौटस्थ्यं अन्यादृशं त्वसिद्धमिति भाव. ॥७४॥

बुद्धेरेव स्थायिन्यायथाविषयं ज्ञानात्मिकाहत्तयोहत्तिमदभिन्ना वह्नेरिव स्फुलिङ्गा निःसरन्तीति सांख्यमतं निरस्यति।

न युगपदग्रहणात् ॥ ७५ ॥

हत्तिहत्तिमतोरभेदे हत्तिमदवस्थित्या हत्तेरप्यवस्थितिर्वाच्या तथाच सर्व्वपदार्थग्रहणं युगपत्स्यात् नचैवं तस्मान्नाभेदइति ॥ ७५ ॥

अथ हत्तीनामनवस्थायित्वमुच्यत तत्राह ।

अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ७६ ॥

अप्रत्यभिज्ञाने प्रत्यभिज्ञानस्य अभावे विनाशे हत्तिमतोऽपिविनाशः स्यादतोन द्वयोरैक्यं ॥ ७६ ॥

अयुगपद्ग्रहणं स्वमते व्युत्पादयति ।

क्रमवृत्तित्वादयुगपद्ग्रहणं ॥ ७७ ॥

मनस इत्यादिः मनसोऽणुत्वादिन्द्रियैः सह क्रमेण सम्बन्धात् ज्ञानानां क्रमिकत्वं तथाच अविभु चैकं मनः पर्य्यायेण सर्व्वेन्द्रियैः सम्बध्यत इत्यवतारभाष्यं तत्तदिन्द्रियमनःसंयोगे सति ज्ञानमुपपद्यते ॥ ७७ ॥

तद्व्यतिरेके ज्ञानाभावमुपपादयति ।

अप्रत्यभिज्ञानञ्च विषयान्तरव्यासङ्गात् ॥ ७८ ॥

अप्रत्यभिज्ञानं तत्तदिन्द्रियजज्ञानाभावः विषयान्तरेण इन्द्रियान्तरेण मनसः सम्बन्धादित्यर्थः ॥ ७८ ॥

त्वन्मते चेदन्नोपपद्यत इत्याह ।

न गत्यभावात् ॥ ७९ ॥

त्वन्मते मनसः क्रमेणेन्द्रियसम्बन्धोन मनसोविभुत्वेन गत्यभावात् परेतु नकारोन सूत्रान्तर्गतः किन्तु विभुत्वे चान्तः करणस्य पर्य्यायेणेन्द्रियैः संयोगोनेति भाष्यावतारणिकायां इत्याहुः ॥ ७९ ॥

वृत्तिवृत्तिमतोर्वस्तुतोऽभेदेऽपि भेदप्रत्ययप्रतिपादनाय इ अध्यायः शङ्कते ।

स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ॥ ८० ॥

यथा जवाकुसुमादिसन्निधानादेकस्यापि स्फटिकस्य तत्तद्रूपाभिमानस्तथा वृत्तिमदभिन्नापि वृत्तिस्तत्तद्विषयसन्निकर्षवशान्नानेव प्रतिभासत इति ॥ ८० ॥

दूषयति ।

न हेत्वभावात् ॥ ८१ ॥

भ्रमत्वे साधकाभावान्नोक्तं युक्तमित्यर्थः केचित्तु न हेत्वभावादिति भाष्यमिति टीकादर्शनान्नेदं सूत्रं किन्तु तुच्छतया सूत्रकृताऽदूषणान्न्यूनतापरिहाराय भाष्यकृता तदुक्तमिति मन्यन्ते ॥ ८१ ॥

समाप्तं बुद्ध्यनित्यताप्रकरणं ॥ ३३ ॥

स्फटिकेऽपि नानात्वभ्रमदित्यसहमानः सौगतः शङ्कते ।

स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ८२ ॥

स्फटिकान्यत्वाभिमानवदित्यहेतुः कुतः स्फटिकेऽप्यपरापरोत्पत्तेः विलक्षणविलक्षणस्फटिकोत्पत्तेः तत्र मानमाह

३ अध्यायः व्यक्तीनां भावानां क्षणिकत्वात् तत्साधनाय भाष्यं उपचयापच यप्रबन्धदर्शनाच्छरीरेषु प्रतिक्षणं शरीरेषूपचयापचयदर्श नाच्छानात्वं नह्येकस्मिन्नवयविनि परिमाणद्वयसमावेश इति भावः इदं सूत्रमेवेति केचित् ॥ ८२ ॥

सिद्धान्तसूत्रं ।

नियमहेत्वभावाद्यथा दर्शनमभ्यनुज्ञा ॥ ८३ ॥

पदार्थानां विनाशसामग्रीवैशिष्ट्यनियमे मानाभावात् अभ्युपे त्याह यथा दर्शनमिति यदि कस्यचिद्विनाशसामग्रीवैशिष्ट्ये मानं स्यात्तदा क्षणिकत्वं तस्याभ्यनुज्ञायतएव यथाऽन्त्यशब्द इति ॥ ८३ ॥

युक्त्यन्तरमाह ।

नोत्पत्तिविनाशकारणोपलब्धेः ॥ ८४ ॥

न स्फटिकादेःक्षणिकत्वं यतउत्पत्तिविनाशकारणान्युप लब्धा निर्णीतान्यवयवोपचयापचयादीनि न च स्फटिके विनाशकारणमुपलभ्यते येन पूर्व्वविनाशोऽपरोत्पत्तिश्च स्या दिति भावः ॥ ८४ ॥

आक्षिपति। 

क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः ॥ ८५ ॥

दध्युत्पत्तिवद्दध्युत्पत्तिकारणानुपलब्धिवत् तदुपपत्तिः पूर्व्वस्फटिकविनाशकारणानुपलब्धेरुत्तरस्फटिकोत्पत्तिकारणानुपलब्धेश्चोपपत्तिः स्यादिति भावः ॥ ८५ ॥

सिद्धान्तसूत्रं।

लिङ्गतोग्रहणान्नानुपलब्धिः ॥ ८६ ॥

दध्नः क्षीरविनाशस्य च प्रत्यक्षसिद्धत्वात्तत्कारणं कल्प्यते नत्वेवं स्फटिकविनाशोत्पादावुपलभ्येते येन तत्कारणकल्पनं ॥ ८६ ॥

सौगतमते सांख्यदूषणमुपन्यस्यति।

न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ ८७ ॥

न क्षीरस्य नाशोदध्नश्चोत्पत्तिः किन्तु क्षीरस्य परिणामः परिणामशब्दार्थोगुणान्तरप्रादुर्भावः विद्यमानस्य क्षीरस्य पूर्व्वरसतिरोभावोऽन्तरमात्मकगुणान्तरस्याविर्भावादित्यर्थः ॥ ८७ ॥

एतन्निराकरोति सूत्रकारः।

व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्व्वद्रव्यनिवृत्तेरनुमानं ॥ ८८ ॥

व्यूहान्तराद्रचनान्तरात् पूर्व्वावयवसंयोगनाशाद्द्रव्यान्तरोत्पादश्चानुभविकइति भावः ॥ ८८ ॥

दोषान्तराभिधानाय सिद्धान्तिनः सूत्रं।

क्वचिद्विनाशकारणानुपलब्धेः ॥ ८९ ॥

क्वचिच्चोपलब्धेरनैकान्तः चीरदधिदृष्टान्तेन विनाशोत्पादावकारणकाविवेति न युक्तं घटादौ सकारणकत्वोपलब्धेर्व्यभिचारात् वस्तुतः चीरविनाशेऽम्लद्रव्यसंयोगस्य हेतुत्वादम्लरसवत् परमाणुभिश्च दध्यारम्भान्नाकारणकौ चीरविनाशदध्युत्पादाविति ॥ ८९ ॥

समाप्तं चणभङ्गप्रकरणं ॥ २४ ॥

बुद्धेरात्मगुणत्वं यद्यप्यात्मपरीचातएवसिद्धप्रायं तथापि विशिष्य व्युत्पादनाय बुद्ध्यात्मगुणत्वप्रकरणं तच्चेन्द्रियार्थसन्निकर्षाधीनत्वादिन्द्रियादिनिष्ठत्वमेवास्तु भेर्य्याकाशसंयोगाधीनशब्दस्याकाशनिष्ठत्ववदिति पूर्व्वपचे सिद्धान्तसूत्रं।

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ ९० ॥

बुद्धिर्नेन्द्रियस्य न वार्थस्य गुणस्तन्नाशेऽपि ज्ञानस्य स्मरणस्या

वस्थानात् उत्पत्तेः नह्यनुभवितुरभावे स्मरणमुपपद्यतेऽति ३ अध्याय प्रसङ्गादिति भावः ॥ ९० ॥

मनोगुणत्वं निरस्यति ।

युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ ९१ ॥

युगपज्ज्ञेयानुपलब्धेर्हेतोः सिद्धस्य मनसोन कर्तृत्वं धर्म्मिग्राहकमानेन करणत्वेनैव सिद्धेः वस्तुतोयुगपज्ज्ञेयानुपलब्धेरित्यनेन मनसोऽणुत्वं सूचितं तथाच तद्गतसुखाद्यप्रत्यक्षता स्यात् एवं कायव्यूहे तत्तद्देहावच्छेदेन ज्ञानादिकं न स्यादिति ॥९१॥

शङ्कते ।

तदात्मगुणत्वेऽपि तुल्यं ॥ ९२ ॥

तस्याबुद्धेरात्मगुणत्वेऽपि ज्ञानयौगपद्यं तुल्यं आत्मनः सर्व्वेन्द्रियसंयोगात्तथाच सदोषस्तदवस्थएवेति कथं तया युक्त्या मनःसिद्धिरिति भावः ॥ ९२ ॥

उत्तरयति ।

सन्निकर्षाभावात्तदनुत्पत्तिः ॥ ९३ ॥

युगपज्ज्ञानेन्द्रियैः सह मनसः सन्निकर्षाभावान्न यगपन्नाना विषयोपलब्धिरिति भावः ॥ ९३ ॥

आक्षिपति।

नोत्पत्तिकारणानपदेशात्॥ ९४॥

बुद्ध्युत्पत्तौ कारणस्यानपदेशात् अकथनात् नात्मगुणो बुद्धिः आत्ममनःसंयोगस्य कारणत्वे ज्ञानस्य सार्व्वदिकत्वप्रसङ्ग इति भावः॥ ९४॥

बुद्धेरात्मगुणत्वे दोषमप्याह।

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः॥ ९५॥

बुद्धेरात्मन्यवस्थाने विनाशकारणस्याश्रयनाशादेरनुपलब्धेस्तस्याबुद्धेर्नित्यताप्रसङ्गः॥ ९५॥

उत्तरयति।

अनित्यत्वग्रहणाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत्॥ ९६॥

बुद्धेरनित्यत्वस्य ग्रहणात् उत्पादनाशयोरानुभविकत्वात्तत्कारणं कल्पनीयं आत्ममनोयोगादेरुत्पादकत्वमनन्तरोत्पन्नबुद्धेः संस्कारादेर्व्वा नाशकत्वं कल्प्यते चरमबुद्धेस्तु अदृष्टनाशात्कालाद्वा नाशः बुद्धेर्बुद्ध्यन्तरनाश्यत्वेऽनुरूपं दृष्टान्तमाह शब्दवदिति शब्दस्य यथा शब्दान्तरानाश्यत्वं चरमशब्दस्य निमित्तनाशनाश्यत्वं तथा प्रकृतेऽपीति भावः॥ ९६॥

ननु बुद्धेरात्मगुणत्वे संस्कारात्ममनोयोगयोः सत्त्वात् स्मृतीनां यौगपद्यं स्यादत्रैकदेशिनः परिहारमाशङ्कते।

**ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ ९७॥**

ज्ञानं संस्कारकारणं समवेतं यदवच्छेदेन तदवच्छेदेन मनःसन्निकर्षस्य स्मृत्युत्पादकत्वात्तस्य च क्रमिकत्वान्न स्मृतियौगपद्यमित्यर्थः ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदं संस्कारपरमित्यन्ये॥ ९७॥

तन्मतं दूषयति।

**नान्तःशरीरवृत्तित्वान्मनसः ॥ ९८ ॥**

उक्तं न युक्तं मनसः अन्तःशरीरवृत्तित्वात् अन्तःशरीरे वृत्तिर्ज्ञानजनकीभूतो व्यापारो यस्य तत्त्वात् शरीरातिरिक्तावच्छेदेनात्ममनोयोगस्य ज्ञानाहेतुत्वाच्छरीरावच्छिन्नस्य हेतुत्वे तद्दोषतादवस्थ्यमिति भावः ॥ ९८ ॥

एकदेशी शङ्कते।

**साध्यत्वादहेतुः ॥ ९९ ॥**

शरीरावच्छिन्नात्ममनोयोगोन हेतुः साध्यत्वात् असिद्धत्वात् मानाभावादिति भावः ॥ ९९ ॥

स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ १०० ॥

उक्तप्रतिषेधो न युक्तः स्मरतः शरीरधारणरूपायाउपपत्तेर्युक्तेरन्यथा मनसोवहिर्भावे शरीरावच्छिन्नात्ममनोयोगाभावेन प्रयत्नाभावे शरीरधारणं नस्यादिति भावः ॥ १०० ॥

पुनःशङ्कते।

न तदाशुगतित्वान्मनसः ॥१०१ ॥

शरीराधारणं न मनसः आशुगतित्वाच्छीघ्रमेव शरीरे परावृत्तेः ॥ १०१ ॥

दूषयति।

न स्मरणकालानियमात् ॥ १०२ ॥

मनसः शीघ्रमागमनं न युक्तं स्मरणे कालनियमाभावात् कदाचिच्छीघ्रं स्मर्य्यते कदाचित्प्रणिधानादिविलम्बेनापीति नच प्रणिधानं शरीरान्तःस्थितमनसएव वहिर्निर्गमस्तु स्मरणाव्यवहितपूर्व्वमेवेति वाच्यं वहिर्निर्गमान्तःप्रवेशानुकूलक्रियाविभागादिकार्य्यकलापं यावच्छरीरधारणं न स्यादिति भावः ॥ १०२ ॥

एकदेशिमतमन्य एकदेशी दूषयति।

आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥१०३॥

वहिः प्रदेशविशेषे मनःसंयोगविशेषेण सम्भवति यद्धि न स्मृत्यर्थमात्मप्रेरणेन तस्य स्मरणीयज्ञानपूर्व्वकतया प्रागेव स्मृत्यापत्तेः नापि यदृच्छया अकस्मात् आकस्मिकत्वस्य निषेधात् नापि मनसो ज्ञतया ज्ञातृतया मनसो ज्ञातृत्वानभ्युपगमात् प्रेरणयदृच्छाज्ञताभिः प्रयत्नेच्छाज्ञानैरित्यर्थ इति कश्चित्तन्न प्रयत्नेनैव चरितार्थत्वापत्तेः ॥१०३॥

एतन्निराकरोति।

व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानं ॥१०४॥

नृत्यादिकं पश्यतः कण्टकादिना पादव्यथनेन तदवच्छेदेन मनःसंयोगो यथा जायते तथैतदपीति भावः इतरथा तत्र मनःसंयोगेऽप्युक्तदोषाः स्युः अदृष्टविशेषाधीनकर्म्मवशादत्रेति चेत्तुल्यं प्रकृतेऽपीति भावः॥ १०४॥

स्मरणायौगपद्यं स्वयमुपपादयति ।

प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपदस्मरणं ॥ १०५ ॥

प्रणिधानं चित्तैकाग्र्यं सुसूर्षेति यावत् लिङ्गज्ञानं उद्बोधकं उद्बोधकानामानन्त्यादादिपदं ज्ञानात्परतो योजनीयं तस्य क्रमात् स्मरणक्रमः यदि च युगपदुद्बोधकानि तदा तावद्विषयकस्मरणमिष्यत एव यथा पदज्ञानादाविति मन्तव्यं ॥ १०५ ॥

नन्विच्छादीनां मनोधर्मत्वात्तेषां ज्ञानजन्यत्वात् सामानाधिकरण्येन च तत्र कार्य्यकारणभावात्कथं ज्ञानस्यात्मगुणत्वमित्याशङ्कायां सिद्धान्तसूत्रं ।

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ १०६ ॥

ज्ञस्य ज्ञानवतआत्मनइच्छादयः हेतुमाह आरम्भनिवृत्त्योरिच्छाद्वेषनिमित्तत्वादिति प्रवृत्तिनिवृत्त्योरिच्छाद्वेषजन्यत्वात्तत्र च सामानाधिकरण्येन ज्ञानस्य हेतुत्वमिति भावः यद्वा ज्ञस्य ज्ञानवतोयाविच्छाद्वेषौ तन्निमित्तत्वादित्यर्थः तथा च ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यं नासिद्धं ॥ १०६ ॥

नन्वस्तु तेषां सामानाधिकरण्यं परन्तु तेषामधिकरणं द्रव्यान्तरं कायाकारः पार्थिवादिपरमाणुपुञ्ज एवेति चार्वाकः शङ्कते।

## तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥१०७॥

पार्थिवाद्येषु देहेषु ज्ञानादेर्न प्रतिषेधः कुतः इच्छाद्वेषयोस्तल्लिङ्गत्वादारम्भनिवृत्तिलिङ्गकत्वात्तयोः चेष्टाविशेषलिङ्गकत्वाच्चेष्टायाश्च शरीरे प्रत्यक्षसिद्धत्वादिति भावः ॥ १०७ ॥

समाधित्सुः प्रतिबन्दिमाह।

## परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥१०८॥

आरम्भनिवृत्त्यनुमापकक्रियाविशेषदर्शनात् परश्वादिषु ज्ञानादिसिद्धिप्रसङ्गः तस्मात्क्रियाविशेषाणां प्रयत्नादिजन्यत्वं सम्बन्धान्तरेण नतु समवायेन व्यभिचारादिति भावः ॥ १०८ ॥

स्वमते व्युत्पादयति।

## नियमानियमौ तु तद्विशेषकौ ॥१०९॥

तद्विशेषकौ तयोश्चेतनाचेतनयोर्विशेषकौ इतरव्यावर्त्तकौ नियमानियमौ समवायेन जन्यत्वानियमतदभावौ समवायेन ज्ञानेच्छादीनां चेतनधर्म्मत्वादवच्छेदकतया च शरीरे तेषां जन्य

३ अध्याय: जनकभावः परस्पादौ यत्नविषयतया क्रिया वस्तुतस्तु चेष्टैव परस्पादिक्रियाजनिका यत्नादेस्तद्धेतुत्वे मानाभावः ॥ १०९ ॥

इच्छादीनां मनोगुणत्वाभावे युक्त्यन्तरमाह ।

**यथोक्तहेतुत्वात् पारतन्त्र्यात् स्वकृताभ्याग माच्च न मनसः ॥ ११० ॥**

इच्छादय इति शेषः यथोक्तहेतुत्वात् ज्ञानेच्छादीनां सामानाधिकरण्येन कार्य्यकारणभावात् पारतन्त्र्यात् मनसश्चेतन सहकारित्वादिच्छादयोन तद्गुणाः वयन्तु इच्छादीनां पारतन्त्र्यात् पराधीनविषयताशालित्वात् इच्छादीनं हि समानाधिकरणस्वजनकज्ञानविषयतैव विषयता ज्ञानवैयधिकरण्ये च तन्न स्यादिति भावः स्वकृतात्स्वयंकृतात्कर्मणः अभ्यागमो भोगः स मनसोयत्नादिसत्त्वे न स्यान्नह्यन्यकृतात्कर्मणोभोगः नवः भोगोऽपि मनसः भोक्तुर्वन्धमोक्षादिभागिन एवात्मत्वात्त द्भिन्न आत्मनि मानाभावात् आत्मनः सुखादिसाक्षात्कारानुरोधान्महत्त्वं मनसश्च धर्मिग्राहकमानादणुत्वमतोऽपि नैक्यं न च मनसः परमाणुत्वाल्लाघवाच्च नित्यत्वं तन्मते तथा चात्ममनसो नित्यत्वात्सदा ज्ञानादिप्रसङ्गादनिर्मोक्षः स्यादतोऽन्तःकरणस्या नित्यत्वं तन्नाशश्च मोक्ष इति वाच्यं अदृष्टाद्यभावेन नित्य योरपि तन्त्र्ययोरिव फलाजनकत्वात नच ज्ञानादिकं प्रकृत्य

इत्येतत्सर्वं मनएवेति श्रुतेर्दर्शनसपर्श ज्ञानादिकं अभेदमुखेनो २ पचारोपादानोपादेयभावकथनादिति वाच्यं अन्नं वै प्राणा इत्यादौ निमित्तेऽपि दर्शनात् कारणत्वमात्रे तात्पर्य्यादिति तत्त्वं ॥ ११० ॥

आत्मगुणत्वमुपसंहरति ।

परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ १११ ॥

इच्छादिकमात्मगुण इत्यादिः हेतुमाह परिशेषात् शरीरादिहेतुनिरासात् यथोक्तहेतूनां दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादीनां उपपत्तेः उपपन्नत्वात् ॥ १११ ॥

स्मृतेरात्मगुणत्वमर्थसिद्धमपि शिष्यबुद्धिवैशद्याय पृथग्व्युत्पादयति ॥

स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ११२ ॥

तुरप्यर्थे ज्ञस्वाभाव्यात् ज्ञानवत्स्वाभाव्यात् ज्ञानत्वावच्छिन्नवत्त्वं ह्यात्मनः स्वभावः स्मृतेश्च ज्ञानत्वावच्छिन्नत्वात्तद्धर्मत्वमर्थात्सिद्धं यद्वा ज्ञस्वाभाव्यात् स्मृतिहेतुज्ञानस्यात्मवृत्तित्वसिद्धेः स्मृतेरात्मवृत्तित्वमपि सिद्धं परे तु ज्ञानस्याशुविनाशित्वात्कथं स्मृतिहेतुतेत्यत आह स्मरणमित्यादि ज्ञानवतः स्वभावः संस्कारः तस्मादित्यर्थः इत्याहुः ॥ ११२ ॥

[र अध्याय:] स्मृतेर्यौगपद्यसमाधानाय प्रणिधानादीनामुद्बोधकानां क्रमो हेतुरुक्तस्तच्च प्रणिधानादीनि दर्शयति ।

प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्म्माधर्म्मनिमित्तेभ्यः ॥ ४१ ॥

स्मरणमित्यनुवर्त्तते निमित्तशब्दस्य द्वन्द्वात्परं श्रुतस्य प्रत्येकमभेदेनान्वयः प्रणिधानं मनसोविषयान्तरसञ्चारवारणं निबन्ध एकग्रन्थोपनिबन्धनं यथा प्रमाणेन प्रमेयादिस्मरणं अभ्यासः संस्कारबाहुल्यं एतस्य यद्यपि नोद्बोधकत्वं तथापि तादृशे शीघ्रमुद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः अभ्यासो दृढतरसंस्कारः उद्बोधकत्वेनोक्तइति केचित् लिङ्गं व्याप्यं व्यापकस्य स्मारकं लक्षणं यथा कपिध्वजादि अर्जुनादेः सादृश्यं देहादेः परिग्रहः स्वीकारस्तस्य स्वस्वामिभावोऽर्थः तदेकतरेणान्यतरस्मरणं आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ सम्बन्धोगुरुशिष्यभावादिः गोवृषन्यायात् पृथगुक्तः आनन्तर्य्यं प्रोक्षणावघातादेः वियोगोयथा दारादेः एककार्य्या अन्तेवासिप्रभृतयः परस्परस्मारकाः विरोधादहिनकुलादेरन्यतरेणापरस्मरणं अतिशयः संस्कारउपनयनादिना आचार्य्यादिस्मारकः प्राप्तिर्धनादेर्दातारं स्मारयति

व्यवधानमावरणं यथा खड्गादेः कोषादि सुखदुःखयोर २ अभ्यासः न्यतरेणापरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणं इच्छाद्वेषौ तद्विषयकतया गृहीतौ तस्य स्मारकौ भयं मरणादेर्भयहेतोः स्मारकं अर्थित्वं दातुः शाखादेः क्रिया वाय्वादेः रागात्प्रीतिः पुत्रादेः स्मरणं धर्माधर्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति उक्तेषु च किञ्चित्स्वरूपसत्किञ्चिच्च ज्ञातमुद्बोधकं शिष्यव्युत्पादनाय चायं प्रपञ्चः ॥ ११२ ॥

समाप्तं बुद्ध्यात्मगुणप्रकरणं ॥ २५ ॥

बुद्धेर्बुद्ध्यन्तरादिना नाश उक्तः स च तृतीयक्षणवर्त्तिध्वंसप्रतियोगित्वसिद्धौ स्यादतो बुद्धेरुत्पन्नापवर्गित्वं व्युत्पादनीयं तत्र सिद्धान्तसूत्रं ।

कर्म्मानवस्थायिग्रहणात् ॥ ११४ ॥

शरीरादिकर्म्मधारायाः अनवस्थायिन्याः प्रत्यक्षधारापि नाश्या न चाद्यबुद्धेरुत्तरोत्तरग्राहकत्वं विरम्यव्यापाराभावात् पूर्व्वपूर्व्वस्य च परतत्परतोऽननुभवादिना नाशसिद्धावाश्रयनाशादेरभावाद्विरोधिगुणस्यैव नाशकत्वमिति कर्म्मवद्बुद्धेरनवस्थायित्वग्रहणादिति वार्थः ॥ ११४ ॥

शङ्कते।

अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्संपाते रूपाव्यक्तग्रहणवत् ॥ ११५ ॥

बुद्धिर्यद्याशुविनाशिनी स्याद्योग्याशेषविशेषधर्मविशिष्टधर्मिग्राहिणी न स्याद्विद्युत्सम्पातकालीनवस्तुग्रहणवत् न चैवं तस्मान्न तथेत्यर्थः ॥ ११५ ॥

उत्तरयति।

हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा ॥ ११६ ॥

प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वस्याभ्यनुज्ञा त्वया कृता विद्युत्सम्पातदृष्टान्तरूपस्य हेतोः साधकस्योपादानात् तथा चांशतोबाधइति भावः ॥ ११६ ॥

अस्तु तर्हि तद्दृष्टान्तेनान्यासां बुद्धीनामनवस्थायित्वमित्यत आह।

न प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणमनवस्थायित्वेऽपि ॥ ११७ ॥

यथा प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वेऽप्यभि

व्यक्तग्रहणं तथान्यत्रापि स्यात् विद्युत्सम्पातस्थले या बुद्धिरुत्प 
न्ना सा स्वविषये व्यक्तैवेति भावः ॥ ११७ ॥

समाप्तं बुद्धेरुत्पन्नापवर्गित्वप्रकरणं ॥ ३६ ॥

अथ बुद्धिः शरीरगुणत्वाभावप्रकरणं न च प्रागेव तत्सिद्धे रनारम्भणीयमेतत् गौरोऽहं जानामीत्याद्यनुभवेन तत्साध कानामाभासीकरणादतोविशिष्य तदुत्पादनाय संशयबीज माह ॥

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ११८ ॥

द्रव्ये चन्दनादौ स्वगुणस्य रूपादेः परगुणस्य शैत्यादेश्च ग्रहादेवं शरीरे रूपादेरौष्ण्यस्य च ग्रहाद्बुद्ध्यादिः शरीरगुणो न वेति संशयः ॥ ११८ ॥

तत्र सिद्धान्तसूत्रं।

यावच्छरीरभावित्वाद्रूपादीनां ॥ ११९ ॥

न शरीरगुणश्चेतनेति आदौ भाष्यकृतः पूरणं न शरीर विशेषगुणइत्यर्थः अयं तर्काकारः बुद्ध्यादिकं शरीरविशेषगुणः स्याद्यावच्छरीरभावि स्यात् रूपादिवत् तत्परिष्कार्य्यं चानु मानं बुद्ध्यादिकं न शरीरविशेषगुणः अयावद्द्रव्यभावित्वात्

३ अध्यायः शब्दवत् व्यतिरेके रूपवदा अयावद्द्रव्यभाविलक्ष आश्रयनाभि मतकालीननाशप्रतियोगित्वं ॥ ११९ ॥

पिठरपाकमते व्यभिचारमाशङ्कते।

न पाकजगुणान्तरोत्पत्तेः ॥ १२० ॥

शरीरे पाकाधीनरूपादिना व्यभिचारान्नोक्तं साधनं युक्त मित्यर्थः परे तु सिद्धान्तसूत्रमेवेदं तथाहि पाकजरूपेण व्यभि चारः शङ्कनीयः पाकजगुणान्तरस्य रूपान्तरस्योत्पत्तेः तथा च स्वसमानाधिकरणस्वसमानजातीयासमानकालीनत्वं पूर्व्वो क्तहेतौ नाशे विशेषणीयमित्यर्थ इत्याहुः ॥ १२० ॥

सिद्धान्तसूत्रं।

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ १२१ ॥

पाकजानां प्रतिद्वन्द्विनि पूर्व्वशरीरप्रतिरूपके शरीरान्तरे सिद्धेः घटादौ पाकजरूपसम्भवेऽपि शरीरे न तत्सम्भवः शरीरा वयवानां चर्म्मादीनामग्निसंयोगविशेषेण नाशावश्यकत्वात् परे तु पाकजानां प्रतिद्वन्द्विनोऽग्निसंयोगात्सिद्धेः तथाच तादृशाग्नि संयोगासमानाधिकरणत्वमर्थस्तेनाग्निसंयोगनाश्येऽग्निसंयोग जन्ये च न व्यभिचार इत्याहुः अन्ये तु शरीरगुणत्वाभावे हे त्वन्तरमाह प्रतिद्वन्द्वीति पाकजानां पूर्व्वरूपादिकं प्रतिद्वन्द्वि

विरोधि एकस्मिन् रूपे विद्यमाने रूपान्तराभावात् प्रकृते त्वेक- ३ अध्यायः
स्मिन् ज्ञाने सत्यपि द्वितीयक्षणे ज्ञानान्तरोत्पत्तेर्ज्ञानादिकं न
शरीरविशेषगुण इत्यर्थ इत्याह ॥ १२१ ॥

हेत्वन्तरमाह ।

शरीरव्यापित्वात् ॥ १२२ ॥

शरीरविशेषगुणानामिति शेषः ज्ञानसुखादिकन्तु न
शरीरव्यापकं हृदयाद्यवच्छेदेन तदानुभविकत्वादिति भावः
॥ १२२ ॥

दूषयति ।

न केशनखादिष्वनुपलब्धेः ॥ १२३ ॥

शरीररूपादेराश्रयव्यापकत्वं न शारीरस्य गौररूप
स्पर्शादेः केशनखादावनुपलब्धेरित्यर्थः ॥ १२३ ॥

दूषयति ।

त्वक्पर्य्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥
॥ १२४ ॥

स्पष्टं अन्ये तु चेतना न शरीरगुणः शरीरव्यापित्वात् शरीरे
तदवयवेषु सर्व्वेष्वेकेन सम्बन्धेन सत्त्वात् शरीरगुणस्तु न स्वाव

 यवद्यक्तिः शङ्कते न केशेति चैतन्यात्मानुपलब्धेः समाधत्ते लगितीत्याह ॥ १२४ ॥

हेत्वन्तरमाह ।

शरीरगुणवैधर्म्यात् ॥ १२५ ॥

बुद्धिर्न शरीरगुणः शरीरगुणवैधर्म्यात् वहिरिन्द्रियावेद्य त्वे सति वेद्यत्वात् ॥ १२५ ॥

आक्षिपति ।

न रूपादीनामितरेतरवैधर्म्यात् ॥ १२६ ॥

नोक्तं युक्तं रूपादीनां परस्परवैधर्म्यात् तथाच तद्रीत्या स्पर्शादीनां शरीरगुणत्वं नस्याद् चाक्षुषत्वात्तथा चोक्तमप्रयो जकमिति भावः ॥ १२६ ॥

समाधत्ते ।

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ १२७ ॥

रूपादीनां न शरीरगुणत्वप्रतिषेधः कुतः ऐन्द्रियकत्वात् तत्तदिन्द्रियग्राह्यत्वलक्षणतत्तद्गुणवैधर्म्येऽपि शरीरगुणत्वा वच्छिन्नवैधर्म्यस्य वहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वस्याभावात् बुद्धौ च तस्य सत्वादिति भावः ॥ १२७ ॥

समाप्तं बुद्धेः शरीरगुणभेदप्रकरणं ॥ ९ ॥

अथ क्रमप्राप्ता मनःपरीक्षा तत्र प्रतिशरीरमेकं मनस्त्वचु २ रव्याद्यर्थः रादिसहकारितया मनःपञ्चकं वेति संशये मनःपञ्चकमेवो चितं तेन च प्रत्येकं सकलमनःसम्बन्धाद्युगपद्यौगपद्येऽप पद्येति इति पूर्व्वपक्षे सिद्धान्तसूत्रं ।

ज्ञानायौगपद्यादेकं मनः ॥ १२८ ॥

प्रतिशरीरं मनोनानात्वे व्यासंगस्थलेऽपि यौगपद्यं स्याद् तेन मनोनानात्वमिति भावः ॥ १२८ ॥

दीर्घशष्कुलीभक्षणादौ ज्ञानयौगपद्यान्नानात्वं स्यादि त्याशङ्कते ।

न युगपदनेकक्रियोपलब्धेः ॥ १२९ ॥

न एकं मनः अनेकक्रियाणां अनेकज्ञानानामुपलब्धे रित्यर्थः ॥ १२९ ॥

समाधत्ते ।

अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात्

॥ १३० ॥

क्रमिकेऽपि तदुपलब्धिर्यौगपद्योपलब्धिराशुसञ्चारात् शीघ्रसञ्चारात्मकदोषात् यथा अलातचक्रे वेगातिशयेन भ्राम्यमाणेक्रियासन्तानस्य भेदेनानुपलब्धिरिति ॥ १३० ॥

 ननु यौगपद्योपपादकतया मनसो वैभवं स्यादत आह ।

यथोक्तहेतुत्वाच्चाणु ॥ १३१ ॥

मनइति शेषः यथोक्तस्य ज्ञानायौगपद्यस्य हेतुत्वान्मनोऽणुत्वसाधकत्वादित्यर्थः ॥ १३१ ॥

समाप्तं मनःपरीक्षाप्रकरणं ॥ २८ ॥

अथ प्रसङ्गाच्छरीरस्य तत्तत्पुरुषादृष्टनिष्पाद्यताप्रकरणं अथवा एकत्रैव शरीरे मनसः सर्वैरात्मभिः सह संयोगात्सर्व्वैव मनसा ज्ञानं जन्यतामतस्तददृष्टजन्यताप्रतिपादनप्रकरणं तत्र शरीरं तत्तत्पुरुषसमवेतादृष्टनिमित्तकं नवेति विप्रतिपत्तौ निषेधकोटिस्त्रेधा अदृष्टाभावात् तस्य शरीरहेतुत्वाभावात् अदृष्टस्य पुरुषसमवायाभावाद्वा तत्राद्यं पक्षं निरस्यति।

पूर्व्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ १३२ ॥

पूर्व्वकृतस्य यागदानहिंसादेः फलस्य धर्म्माधर्म्मरूपस्य अनुबन्धात्सहकारिभावात्तस्य शरीरस्योत्पत्तिः ॥ १३२ ॥

आक्षिपति ।

भूतेभ्योमूर्त्त्युपादानवत्तदुपादानं ॥ १३३ ॥

भूतेभ्यइति सावधारणं तथाचादृष्टनिरपेक्षेभ्योभूतेभ्यः

परमाणुभ्योमूर्त्तेर्मृदादेरुपादानमारम्भोयथा तथैव तस्य ३ अध्यायः
शरीरस्य उपादानमारम्भः परमाणुभ्योऽदृष्टनिरपेक्षेभ्य
इत्यर्थः ॥ १३३ ॥

समाधत्ते।

न साध्यसमत्वात् ॥ १३४ ॥

नोक्तं युक्तं दृष्टान्तस्य साध्यसमत्वात् पक्षसमत्वात् मृदादे
रप्यदृष्टसापेक्षपरमाणुभ्य एवोत्पत्तेरुपगमात्तदजन्यत्वस्यतत्रा
सिद्धेरिति भावः ॥ १३४ ॥

न मृदादिसाम्यमित्याह सूत्राभ्यां।

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ १३५॥

तथाहारस्य ॥ १३६ ॥

शरीरे न मृदादिसाम्यं मातापित्रोः कर्मणः शरीरोत्पत्ति
निमित्तत्वात् पुत्रदर्शनादिजन्यसुखानुभावकादृष्टस्य द्वारा
धनादिजन्यस्य पुत्रादिनिमित्तत्वात् एवं मातापित्रोराहा
रस्य शरीरोत्पत्तिनिमित्तत्वाददृष्टसहकारेणाहारस्य शुक्र
शोणितादिद्वारा कललादिजनकत्वात् आहारस्य पितामह
पिण्डभोजनादेरदृष्टद्वारा पुत्रजनकत्वादित्यर्थ इत्यन्ये ॥ १३५
॥ १३६ ॥

३ अध्यायः

आहारस्यादृष्टसहकारित्वे विपक्षे बाधकमाह।

प्राप्तौ चानियमात् ॥ १३७ ॥

प्राप्तौ दम्पत्योः सम्प्रयोगे तु गर्भधारणस्य यतो न नियमस्त तोऽदृष्टस्य सहकारित्वमावश्यकमिति भावः ॥ १३७ ॥

नन्वदृष्टनिरपेक्षैरेव भूतैः कैश्चित् स्वभावविशेषाच्छरीरं जन्यतां स्वभावानभ्युपगमे च शरीरस्य सर्व्वात्मसंयुक्तत्वात् साधारण्यापत्तिरत आह।

शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म्म ॥ १३८ ॥

अयमर्थः शरीरस्य सर्व्वात्मसंयुक्तत्वेऽपि संयोगविशेषोऽव च्छेदकतालक्षणो येनात्मना सह तदीयं तच्छरीरं संयोगवि शेष एव कुत इत्यत आह संयोगेति संयोगविशेषोत्पत्तौ कर्म्म अदृष्ट विशेषो निमित्तं यथा शरीरोत्पत्तावदृष्टविशेषो नि मित्तमिति संयोगे विशेषस्तदात्मज्ञानजनननियामको जाति विशेष एव संयोगः [illegible]वयवसंस्थानविशेष इति कश्चित् ॥ १३[illegible]

अथ शरीरं नादृष्टजन्यं प्रकृतेरारम्भस्वभावत्वादेव तदुप 
पत्तेः प्रतिबन्धकपूर्व्वशरीरापगमस्त्वदृष्टाधीनः जलस्य निम्ना नुसरणस्वभावस्येव बन्धापगमाधीनत्वं इति द्वितीयपक्षं सांख्य सम्मतं निरस्यति ।

एतेनानियमः प्रत्युक्तः ॥ १३९ ॥

एतेन अदृष्टहेतुकत्वव्यवस्थापनेन अनियमस्तु आत्मनः कदाचिन्मानुषशरीरसम्बन्धः कदाचिदन्यादृशः किञ्चिच्च शरीरं सकलावयवं किञ्चिच्च विकलावयवमित्यादि अदृष्टहेतु त्वानभ्युपगमे त्वयमनियमो न त्वन्मते किन्त्वादृष्टनिरपेक्ष प्रकृतिमात्रारब्धत्वे सर्व्वात्मसाधारण्यं शरीरस्य स्यात् इति भावः अन्ये तु अदृष्टमप्यनियतं स्यादित्यत्राह एतेनेति तत्रा प्यदृष्टान्तरमित्यनादित्वमेवेति भावइत्याहुः ॥ १३९ ॥

आर्हतास्तु मनःपरमाणुगुणमदृष्टं मन्यन्ते तथाहि पार्थि वाः परमाणवः सहिताः स्वादृष्टवशाच्छरीरमारभन्ते मनश्च स्वादृष्टप्रयुक्तं शरीरमाविशति तच्चादृष्टं स्वभावादेव पुरु षस्य सुखदुःखे साधयतीति तत्रोत्तरमाह ।

पुनस्तत्प्रसङ्गोऽपवर्गे ॥ १४० ॥

तत्तदात्माद्दष्टोपग्रहं विनैव तत्तदात्मोपभोगाय पर माणवश्चेच्छरीरमारभन्ते मुक्तेऽपि तदात्मनि तद्भोगाय

३ अध्यायः शरीरमारभेरन् अपवर्ग इत्युपलक्षणं संसारिणामपि नरकरि तुरगादिशरीरोपपत्ते विनिगमकं न स्यादिति भावः ॥ १४० ॥

अदृष्टस्य मनोगुणत्वमपि दूषयति ।

मनःकर्म्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः ॥ १४१ ॥

संयोगस्य शरीरारम्भकस्य ज्ञानादिजनकस्य च उच्छेदो न स्यात् कुतः मनसो यत्कर्म्म अदृष्टं तन्निमित्तत्वात् तस्य नित्यत्वात्तादृशसंयोगधारा नोच्छिद्येत तस्यानित्यत्वेऽपि व्यधिकरणभोगस्य तन्नाशकत्वेऽतिप्रसङ्ग इति भावः ॥ १४१ ॥

संयोगानुच्छेदे का क्षतिरत आह ।

नित्यत्वप्रसङ्गश्च प्रापणानुपपत्तेः ॥ १४२ ॥

तथा सति प्रापणस्य मरणस्यानुपपत्तेः शरीरादेर्नित्यत्वस्याविनाशित्वस्य प्रसङ्गः ॥ १४२ ॥

आक्षिपति ।

अणुश्यामतानित्यत्ववत् स्यात् ॥ १४३ ॥

यथा परमाणोःश्यामता नित्यापि निवर्त्तते तथा शरीरादिकमपि निवर्त्तते यद्वा तथैव परमाणुनिष्ठं नित्यमप्यदृष्टं निवर्त्तते तदभावाच्च नापवर्गे शरीरमिति ॥ १४३ ॥

नाकृताभ्यागमप्रसङ्गात् ॥ १४४ ॥

अकृतस्य प्रमाणाविषयस्य अभ्यागमः स्वीकारस्तत्प्रसङ्गादित्यर्थः नहि परमाणुनिष्ठादृष्टस्य कारणस्य सत्त्वे शरीरोच्छेदः स्यादेवमणुश्यामता नित्यत्वस्यापि प्रमाणागोचरस्य स्वीकारः स्यात्तथाच दृष्टान्तासिद्धिः न वाऽनादेर्भावस्य नाशः सम्भवति जन्यभावत्वेन तद्धेतुत्वात् यद्वा नित्यादृष्टाच्छरीरसम्बन्धोपगमे अकृतात्स्वयमजनितात्कर्मणोऽभ्यागमः फलसम्बन्धः स्यात्तथाचस्वाकृतत्वाविशेषात् किं शरीरं कस्य भविष्यतीत्यत्र नियामकाभाव इति भावः ॥ १४४ ॥

समाप्तं शरीरस्यादृष्टनिष्पाद्यताप्रकरणं ॥ ३८ ॥

समाप्तञ्च तृतीयाध्यायस्य द्वितीयमाह्निकं ॥ २ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ तृतीयाध्यायवृत्तिः समाप्ता ॥ ३ ॥

---

४ अध्यायः सूरकोटिविजयिप्रभाभरं योगिमानसचरं परं महः।
श्यामलं किमपि धाम कामदं कामकोटिकमनीयमाश्रये॥

तृतीये तावदात्मादिप्रमेयषट्कं कारणरूपं परीक्षितमथ कार्य्यरूपं प्रवृत्त्यादिप्रमेयषट्कमवसरतो हेतुमद्भावेन च परीक्षणीयं यद्यपि प्रथमाह्निके षट्कं परीक्षणीयं द्वितीयाह्निके तु तत्त्वज्ञानं तथापि तस्यापवर्गहेतुत्वादुपोद्घातेन च परीक्षणीयत्वादपवर्गपरीक्षान्तःपातितया षट्कपरीक्षैवाध्यायार्थः तत्र चोद्दिष्टधर्मवत्तया षट्कपरीक्षा प्रथमाह्निकार्थः तत्र प्रथमाह्निके चतुर्दशप्रकरणानि तत्र चोक्तरूपवत्तया प्रवृत्तिदोषयोः परीक्षा प्रथमप्रकरणार्थः नचार्थभेदात् प्रकरणभेदः यथा तथेति परस्परसाकाङ्क्षाभ्यामवयवाभ्यामुक्तरूपवत्त्वलक्षणैकार्थवत्त्वकथनात् प्रवृत्तिपरीक्षायामाकाङ्क्षितायां सूत्रं।

प्रवृत्तिर्य्यथोक्ता॥१॥

अत्र तथैवेति शेषं पूरयन्ति तदयुक्तं तथासत्यत्रैव यथाशब्दस्याकाङ्क्षाशान्तावग्रिमसूत्रस्थतथाशब्देऽपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदापत्तेस्तस्मादग्रिमसूत्रस्थतथाशब्देनान्वयो युक्तः प्रवृत्तिर्य्यथा उक्तलक्षणवती तथा दोषा अप्युक्तलक्षणवन्त इत्यग्रिमसूत्रसम्बलितोऽर्थः प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इत्युक्तलक्षणसत्त्वात्सिद्धं लक्षणमिति भावः प्रवृ

त्तिस्तु द्वयी कारणरूपा कार्य्यरूपा च द्वे अप्यात्मसमवेते 
तत्राद्या जन्यत्वेनाविशिष्टा विशिष्टा वा यत्नत्वजातिमती प्रत्यक्ष
सिद्धा द्वितीया तु धर्म्माधर्म्मरूपा यागादेरगम्यागमनादेश्च
चिरध्वस्तस्य व्यापारतया कर्म्मनाशाजलस्पर्शादेः प्रायश्चित्ता
देश्च नाश्यतया सिध्यतीति ॥ १ ॥

दोषपरीक्षायां प्राप्ताधामाह ।

तथा दोषाः ॥ २ ॥

तथा दोषा अपि प्रवर्त्तना लक्षणा इत्युक्तलक्षणवन्त एवेति नातिसिद्धिरिति भावः ॥ २ ॥

समाप्तं प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणं ॥ ४० ॥

अथ त्रैराश्येन विशेषेण दोषपरीक्षणाय तत्त्रैराश्यप्रकरणं तत्र सिद्धान्तसूत्रं ।

तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां दोषाणां त्रयोराशयः त्रयः पक्षा नतु रागद्वेषमोहानामेकैकत्वं तेषामर्थान्तरभावात् अवान्तरभेदवत्त्वात् तथाच भयशोकमानादीनामत्रैवान्तर्भावान्न विभागन्यूनत्वं इच्छात्वद्वेषत्वमिथ्याज्ञानत्वरूपविरुद्धधर्म्मवत्त्वान्न विभागाधिक्यं इच्छात्वादिकन्तु रागादावनुभवसिद्धं तत्र रागपक्षः

४ अध्याय: कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति कामो रिरंसा रतिश्च विजातीयः संयोगः नारीगताभिलाष इति तु न युक्तं स्त्रियाः कामेऽव्याप्तेः मत्सरः स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा यथा राजकीयादुदपानाज्जलोदकं पेयं इत्यादि एवं परगुणनिवारणेच्छाऽपि स्पृहा धर्माविरोधेन प्राप्तीच्छा तृष्णा इदं मे न क्षीयतामितीच्छा उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव धर्मविरोधेन परद्रव्येच्छा लोभः परवञ्चनेच्छा माया कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः। द्वेषपक्षः क्रोध ईर्ष्याऽसूया द्रोहोऽमर्षोऽभिमान इति क्रोधो नेत्रलौहित्यादि हेतुर्दोषविशेषः ईर्ष्या साधारणे वस्तुनि परस्वत्वात्तद्ग्रहीतरि द्वेषः यथा दुरन्तदायादानां असूया परगुणादौ द्वेषः द्रोहो नाशाय द्वेषः हिंसा तु द्रोहजन्या परे तु तान्द्रोहं मन्यन्ते अमर्षः कृतापराधे असमर्थस्य द्वेषः अभिमानोऽपकारिण्यकिञ्चित्करस्यात्मनि द्वेषः। मोहपक्षः विपर्ययसंशयतर्कमानप्रमाद भयशोकाः विपर्ययो मिथ्याज्ञानापरपर्यायोऽयथार्थनिश्चयः एकधर्मिकविरुद्धभावाभावज्ञानं संशयः स एव विचिकित्सेत्युच्यते व्याप्यारोपाद्व्यापकप्रसञ्जनं तर्कः आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीर्मानः गुणवति निर्गुणत्वधीरूपस्मयोऽपि मानेऽन्तर्भवति प्रमादः पूर्वं कर्त्तव्यतया निश्चितेऽप्यकर्त्तव्यताधीः

एवं वैपरीत्येऽपि प्रथमभिन्नेष्टपनिपाते तत्परित्यागानर्हता ४ प्रत्यायः ज्ञानं शोकहेष्टवियोगे तज्ज्ञाभानर्हनाज्ञानं ॥ ३ ॥

शङ्कते ।

नैकप्रत्यनीकभावात् ॥ ४ ॥

रागादीनां भेदोन एकप्रत्यनीकभावात् एकस्मिन्प्रत्यनीकभावोविरोधित्वं यस्य तत्तथा तेनैकनाश्यत्वादित्यर्थः एकं हि तत्त्वज्ञानमेषां विरोधि ॥ ४ ॥

समाधत्ते ।

व्यभिचारादहेतुः ॥ ५ ॥

एकविरोधित्वं भेदनिषेधे न हेतुर्व्यभिचारात् एकाग्निसंयोगनाश्यत्वेऽपि रूपादीनां भेदात् ॥ ५ ॥

किञ्च नैतेषामेकनिवर्त्यत्वं तत्त्वज्ञानस्य मोहनिवर्त्तकत्वात्तन्निवृत्त्या रागादिनिवृत्तेरित्याशयेनाह ।

तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥

यद्यपि बहूनां निर्द्धारणे इष्ठनः तमपोर्वा विधानात् पापतमः पापिष्ठ इति वा युक्तं तथापि द्वौ द्वावधिकृत्य निर्धारणं द्वयोर्निर्धारणे ईयसुनोविधानात्तेन रागमोहयोर्द्वेषमोह

४ अध्यायः योर्वा मोहः पापीयाननर्थमूलं बलवद्धेयमिति यावत् हेतुमाह नामूढस्य मोहशून्यस्य रागद्वेषयोरभावादित्यर्थः न च तत्त्वज्ञानिनोऽपि हिताहितगोचरप्रवृत्तिनिवृत्ती रागद्वेषाधीनेइति तत्र व्यभिचारइति वाच्यं धर्माधर्मप्रयोजकरागद्वेषयोर्दोषत्वेन विवक्षितत्वात् एतदभिप्रायकमेवाद्यक्तोद्विषंश्चमुक्त इत्यादिकमपीति भावः ॥ ६ ॥

अङ्कते।

प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥

दोषनिमित्तत्वान्मोहस्य दोषभिन्नत्वं स्यादभेदेन कार्य्यकारणभावाभावात् दोषेभ्यइत्यात्नगणिकभेदादङ्ग्वचनं प्राप्तस्तर्हीत्यंशस्तु न सूत्रं किन्तु भाष्यकृतः पूरणमित्यपि वदन्ति ॥ ७ ॥

निराकरोति।

न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥

मोहस्य दोषलक्षणसत्त्वाद्दोषत्वं व्यक्तिभेदाच्च हेतुहेतुमद्भावेन विरुध्यतइति भावः ॥ ८ ॥

अप्रयोजकमुक्ताऽनैकान्तिकत्वमप्याह ।

निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥

एकजातीययोरपि द्रव्ययोर्गुणयोश्च निमित्तनैमित्तिकोपपत्तेर्हेतुहेतुमद्भावस्वीकारात्तुल्यजातीयत्वप्रतिषेधेन युक्त इति ॥ ९ ॥

समाप्तं दोषपरीक्षाप्रकरणं ॥ ४१ ॥

क्रमप्राप्ततया प्रेत्यभावे परीक्षणीये प्रेत्यभावः शरीरस्य बुद्धेरात्मनोवेति संशये पुनरुत्पत्तिः प्रेत्यभावइतिलक्षणसूत्राद्विनष्टस्योत्पादः प्रतीयते नचासौ नित्यस्यात्मनः सम्भवतीति शरीरादेः स्यात् न च मृतस्य शरीरादेरुत्पत्तिविरोधात्सेदं युक्तमिति वाच्यं प्रेत्यभावइत्यस्य मुखं व्यादाय स्वपितीतिवत् व्यत्ययेन भूत्वा प्रापणमित्यर्थादत्र सिद्धान्तसूत्रं ।

आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

आत्मनः पूर्वोक्तयुक्त्या नित्यत्वे प्रेत्यभावस्तस्य सिध्यति एकजातीयशरीराद्यसम्बन्धचरमसम्बन्धनाशयोरुत्पादप्राक्ष्णयोरात्मनः सम्भवात् सम्बन्धस्त्ववच्छेद्यावच्छेदकभावलक्षणः सच स्वरूपसम्बन्धविशेषोऽतिरिक्तोवेत्यन्यदेतत् लक्षणसूत्रे पन

४ अध्याय: इत्यत्तिरित्यत्र पुन:पदञ्च प्रेत्यभावप्रवाहस्यानादित्वज्ञाप नाय तज्ज्ञानञ्च वैराग्यायोपयुज्यत इति ॥ १० ॥

ननु प्रेत्यभावउत्पत्तिनिरूप्यः सा च न सजातीयाद्विजातीयाद्वा सम्भवति आद्यपृथिव्यादौ व्यभिचारात्तन्नित्यत्वे मानाभावादतः प्रेत्यभावोऽसिद्ध इत्युपोद्घातात् प्रसङ्गाद्वोत्पत्तिप्रकारं दर्शयति।

व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

व्यक्तानामुत्पत्तिरिति शेषः व्यक्ताद्व्यक्तजातीयात् पृथिव्यादितः व्यक्तानां व्यक्तजातीयानां जन्यपृथिव्यादीनामुत्पत्तिः इत्यत्र पृथिव्यादेः पृथिव्यादितो रूपवदादितस्तद्रूपवदादीनामुत्पत्तेः प्रत्यक्षसिद्धत्वात्परमाणुरपि कल्प्यते त्र्यसरेणोरप दृष्टमहत्त्वेन सावयवावयवत्वसिद्धेस्तस्य लाघवान्नित्यत्वमिति भावः ॥ ११ ॥

अबुद्धा शङ्कते।

न घटाद्घटानिष्पत्तेः ॥ १२ ॥

विशेषकार्य्यकारणभावाभावे सामान्यतोऽपि न तथेति भावः ॥ १२ ॥

विशेषतोऽव्यभिचारेण विरोधी सामान्यतस्तु नास्त्येवेत्या ४ अध्याय अयवान् समाधत्ते ।

व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

सजातीयात्सजातीयोत्पत्ते र्नप्रतिषेधः पृथिवीजातीयात् कपालादितो घटादिनिष्पत्तेः उक्तापादनं चाप्रयोजकमिति भावः ॥ १३ ॥

अनाद्यं नित्यभावपरीक्षाप्रकरणं ॥ ४७ ॥

अथाष्टौ प्रकरणानि प्रसङ्गाद्युक्तानामित्येतत्सिद्ध्यर्थ मुपोद्घातादा तत्रादौ शून्यतोपादानप्रकरणं तत्र पूर्व्वपक्ष सूत्रं ।

अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥

कार्य्याणां भावानामुत्पत्तिर्य्यतोऽङ्कुरादेर्वीजादिकमनुप मृद्य प्रादुर्भावाभावात् तथाच वीजादिविनाशोऽङ्कुराद्युपादा नमिति ॥ १४॥

अत्रोत्तरं ।

नव्याघातादप्रयोगः ॥ १५ ॥

उपमृद्य प्रादुर्भवतीति न युक्तः प्रयोगव्याघातात् उप

४ अध्यायः मर्द्दकस्य पूर्व्वमसत्त्वे उपमर्द्दकत्वायोगात् पूर्व्वं सत्त्वे च परतः प्रादुर्भावायोगात् ॥ १५ ॥

पूर्व्वपक्षी दूषयति।

नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥

नायुक्तः प्रयोगः अतीतेऽनागते च कारकशब्दप्रयोगात् कर्त्तृकर्म्मादिबोधकशब्दप्रयोगात् यथा जनिष्यते पुत्रः जनिष्यमाणं पुत्रमभिनन्दति अभूत् कुम्भोभिन्नं कुम्भमनुशोचति ॥१६॥

नन्वास्तामौपचारिकः प्रयोगस्तथापि किं बीजादेर्व्विनष्टस्योपादानत्वं मन्यसे बीजादिविनाशस्य वा अन्येऽपि तस्योपादानत्वं निमित्तत्वं वा तत्रादौ उत्तरं।

न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥

विनष्टानां बीजादीनामुपादानत्वायोगादत एव न द्वितीयस्तत्र विनष्टं विनाशस्तेनानोत्पत्तिर्द्ध्वंसस्य भावकार्य्यंप्रत्यपि कारणतावच्छेदकत्वात् ॥ १७ ॥

तृतीयेत्वाह।

क्रमनिर्द्देशादप्रतिषेधः ॥ १८ ॥

अभावस्य कारणत्वं न प्रतिषिध्यते प्रतिबन्धकाभावस्य

हेतुत्वोपगमादित्याह क्रमेति बीजे विनष्टेऽङ्कुरो जायत इति ४ अध्यायः
प्रत्ययाद्बीजस्य प्रतिबन्धकस्याभावः कारणं बीजे विनष्टे हि तदवयवैर्जलाभिषिक्तभूम्यवयवसहितैरङ्कुर आरभ्यते अभावमात्रस्य कारणत्वे चूर्णीकृतादपि बीजादङ्कुरोत्पत्तिः स्यादभावस्य निर्विशेषत्वादिति भावः ॥ १८ ॥

समाप्तं शून्यतोपादाननिराकरणप्रकरणं ॥ ४२ ॥

मतान्तरमाह ।

ईश्वरः कारणं पुरुषकर्म्माफल्यदर्शनात् ॥ १९ ॥

अनेन ब्रह्मपरिणामवादो ब्रह्मविवर्त्तवादो वा दर्शित इति वदन्ति तथाहि ब्रह्मैव नामरूपप्रपञ्चभेदेन विपरिणमते मृत्तिकेवोदञ्चनादिभावेन अत एव प्राकृतरूपस्य सत्त्वस्यापरित्यागः प्रपञ्चेषु उदञ्चनादाविव मृत्तिकात्वस्येति परिणामवादः ब्रह्मैव चानाद्यनिर्व्वचनीयाऽविद्यावशान्नानारूपेण विवर्त्तते मुखमिव तत्तज्जलाद्यालम्बनभेदादिति विवर्त्तवादः ननु पुरुषकर्मैव कारणमस्तु किमीश्वरस्य कारणत्वेनेत्यत आह पुरुषेति पुरुषकर्म्मणो हि वैफल्यमपि दृश्यते सहकार्य्यन्तरमवश्यं वाच्यं तथा चेश्वर एव यथा यथेच्छति तथा जगद्विपरिवर्त्तत इत्येवास्तु किं पुरुषकर्म्मणेति भावः वस्तुतस्तु

४ अध्याय: केवलेश्वरकारणतापरं प्रकरणं तदुपादानतापरत्वे तु न किमपि मानमाकलयाम इति ॥ १९ ॥

समाधत्ते ।

न पुरुषकर्म्माभावे फलानिष्पत्तेः ॥ २० ॥

केवलब्रह्मणएव हेतुत्वे तदिच्छाया अप्यतिरिक्ताया स्वविषयताया अनभ्युपगमादभ्युपगमे द्वैतापत्तिरतः सर्वं सर्व्वदा स्यान्न स्याच्च कार्य्यवैचित्र्यमिति पुरुषकर्म्मणोऽपि सहकारिता वाच्या ब्रह्मण उपादानत्वन्तु न सम्भवति असमवायिकारणासम्भवात्तस्य कारणतामात्रं त्विष्यतएवेति भावः ॥ २० ॥

नन्वेवं पुरुषव्यापारस्य फले व्यभिचारो न स्यादिति चेदत आह ।

तत्कारितत्वादहेतुः ॥ २१ ॥

फलाभावस्य पुरुषकर्म्माभावकारितत्वात् पुरुषस्य कर्म्म अदृष्टन्तदभावाधीनत्वात्पुरुषकारः अहेतुः फलानुपधायकः नन्वीश्वरएव कइत्यत्र भाष्यं गुणविशिष्टमात्मान्तरमीश्वरः गुणैर्नित्यज्ञानेच्छाप्रयत्नैः सामान्यगुणैश्च संयोगादिभिर्विशिष्टमात्मान्तरं जीवेभ्योभिन्नआत्मा जगदाराध्यः कृष्यादिकर्म्मां वेदद्वारा हिताहितोपदेशकोजगतः पितेति-परे तु

अथ ज्ञानादीश्वरप्रतिपादनायतत्सिद्धौ तथाहि ईश्वरः कारणं ४ अध्यायः
अर्थान्तरन्यजातस्य अनुमानन्तु चित्यादिकं सकर्तृकं कार्य्यत्वा
द्घटवदित्यूह्यं ननु जीवानामेव कर्तृत्वं स्यादत आह पुरुषेति पुरुष
कर्मणां वैफल्यं दृश्यते तथा च विफले कर्मणि प्रवर्त्तमानत्वा
दस्वत्वं जीवानां यतः उपादानगोचरापरोक्षज्ञानादिमतो
हि कर्तृत्वं न च क्षित्याद्युपादानगोचरज्ञानं जीवानामिति
भावः नन्वदृष्टद्वारा जीवानां कर्तृत्वमस्त्वित्याशङ्कते न पुरुषेति
फलस्य कार्य्यस्य कर्माभावेऽनिष्पत्तेः तत्त्र पुरुषोपभोगसाध
नत्वात्तत्कर्मजन्यत्वमिति स्फारणाय पुरुषेति समाधत्ते तदिति
कर्मणोऽपि तत्कारितत्वादीश्वरकारितत्वादचेतनस्य चेतना
धिष्ठितस्यैव जनकत्वादिति भावः ॥ २१ ॥

प्रमाणमीश्वरोपादानताप्रकरणं ॥ ४४ ॥

यदि च कार्य्याणामाकस्मिकत्वं तदा न परमाण्वादीना
मुपादानत्वं नवेश्वरस्य निमित्तत्वमत आकस्मिकत्वनिराकरण
प्रकरणमारभते तत्र पूर्व्वपक्षसूत्रं ।

अनिमित्ततोभावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्श
नात् ॥ २२ ॥

अनिमित्तत इति प्रथमान्तात्तसिल् अनिमित्ताभावोत्पत्ति

४ अध्यायः रित्यर्थः भावेति स्पष्टार्थं घटाद्युत्पत्तिर्न कारणनियम्या उत्पत्तित्वात् कण्टकतैक्ष्ण्याद्युत्पत्तिवत् यद्वा घटादिकं न सकारणकं भावत्वात्कण्टकतैक्ष्ण्यादिवत् तैक्ष्ण्यं संस्थानविशेषः आदिपदाच्च मयूरचित्रादिपरिग्रहः तदकारणकमेवेत्याशयः ॥ २२ ॥

एकदेशीभ्रान्तादूषयति ।

अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥

अनिमित्ततइति हेतुपञ्चमीनिर्देशादनिमित्तस्यैव निमित्तत्वात् कथमनिमित्ततइति ॥ २३॥

दूषयति ।

निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥

अनिमित्तस्य निमित्तस्य च अर्थान्तरभावात् भेदात् उक्तः प्रतिषेधो न युक्तः अनिमित्तस्य निमित्तत्वासम्भवात् शरीरस्याकर्म्मनिमित्तत्वदूषणं नैव च तद्दूषितप्रायमित्याशयेन नात्र दूषितमिति नव्यास्तु सूत्रद्वयीमेवं व्याचक्षते समाधत्ते अनिमित्तेति अनिमित्तस्य अनिमित्तत्वसाधकस्य निमित्तत्वादनिमित्तत्वानुमितिजनकत्वादनिमित्ततइति व्याहतं अनिमित्तत्वानुमितिजनकानभ्युपगमेऽनिमित्तत्वं न सिध्येदिति कण्टकतैक्ष्ण्यादिक

मपि नानिमित्तकं अदृष्टविशेषसहकृतैरणुभिस्तदुत्पादनादिति ४ अध्यायः
इदं दोषान्तरमाह निमित्तेति इदमेव निमित्तमिद
मनिमित्तमिति प्रतीत्या तयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तः
इतरथा च सार्व्वलौकिकी प्रतीतिर्नोपपद्येतेति भावः ॥ २४ ॥

समाप्तमाकस्मिकत्वप्रकरणं ॥ ४५ ॥

सर्व्वस्यैवानित्यत्वे नात्मादेरपि नित्यत्वं स्यादतः सर्व्वानित्यत्वनिराकरणप्रकरणं तत्र प्रमेयत्वं नित्यत्वव्याप्यं नवेति संशये पूर्व्वपक्षसूत्रं ।

सर्व्वमनित्यमुत्पत्तिविनाशधर्म्मकत्वात् ॥ २५ ॥

अनित्यं विनाशि उत्पत्तिमतो विनाशधर्मकत्वात् उत्पत्तिमत्त्वञ्चाकाशादेरपि मेयत्वात् सिद्धमिति भावः तेन परमते तत्र नासिद्धिः यद्वा उत्पत्तिविनाशधर्म्मकत्वात् उत्पत्तिविनाशधर्म्मकाणां मानसिद्धत्वात्तद्भिन्नमप्रमाणकमिति हृदयं परे तु अनित्यत्वं कादाचित्कत्वं उत्पत्तिधर्म्मकत्वाद्विनाशधर्म्मकत्वादिति हेतुद्वये तात्पर्य्यमित्याहुः ॥ २५ ॥

दूषयति ।

नानित्यतानित्यत्वात् ॥ २६ ॥

उत्पत्तिमत्त्वं न विनाशित्वसाधकं ध्वंसस्य नित्यत्वादविनाशित्वा[illegible] व्यभिचारात् ॥ २६ ॥

आक्षिपति ।

तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥

तस्या अनित्यताया अप्यनित्यत्वं यथाग्निर्दाह्यमिन्धनादेर्विनाशानन्तरं स्वयमपि नश्यति न तु दाह्योन्मज्जनं तथा घटादेरपि नाशो नश्यति न घटाद्युन्मज्जनं ध्वंसध्वंसस्यापि प्रतियोगिध्वंसत्वात् ध्वंसप्रागभावानाधारकालस्य प्रतियोग्यधिकरणत्वमिति व्याप्तेरप्रयोजकत्वान्नोन्मज्जनमित्यन्ये ॥ २७ ॥

समाधत्ते ।

नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥२८॥

नित्यस्य नित्यत्वविशिष्टस्य नित्यत्वस्य न प्रत्याख्यानमिति फलितं यथोपलब्धि उपलब्ध्यनतिक्रमेण तथा च धर्मिग्राहकमानेन लाघवसहकृतेनाकाशादेर्नित्यत्वव्यवस्थापनादिति॥२८॥

समाप्तं सर्व्वानित्यत्वनिराकरणप्रकरणं ॥ ४६ ॥

सर्व्वनित्यत्वे न प्रेत्यभावादिसिद्धिरतस्तन्निराकरणप्रकरणं तत्राक्षेपसूत्रं ।

सर्व्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥

सर्व्वं नित्यं भूतत्वान्मेयत्वाद्वा तत्र दृष्टान्तप्रदर्शनाय पञ्चभूतनित्यत्वादित्युक्तं तेन परमाण्वाकाशदृष्टान्तता लभ्यते॥२९॥

समाधत्ते ।

नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥

सर्व्वनित्यत्वं न युक्तं घटादीनां उत्पत्तिविनाशकारणानां कपालसंयोगमुद्गरपातादीनां उपलब्धेस्तथा चोत्पादविनाशावावश्यकाविति ॥ ३० ॥

पुनः साङ्ख्य आह ।

तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥

उक्तप्रतिषेधोन नित्यस्य परमाण्वादेर्यल्लक्षणं भूतत्वादि तदवरोधात् तत्त्वात्तथा चोत्पादादिप्रत्ययो भ्रान्त इति भावः ॥ ३१ ॥

दूषयति ।

नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

अनित्यत्वनिषेधोन युक्तः उत्पत्तेस्तत्कारणात्तत्प्रमापकादुपलब्धेः तथा चोत्पादविनाशप्रतीतेः प्रामाणिकत्वान्नंतनिषेध इतरथा कादाचित्कत्वप्रतीत्यनुपपत्तेः न चाविर्भावात्तदुपपत्तिस्तस्यैवानित्यत्वे सर्व्वनित्यत्वव्याघातात् । विवेचयिष्यते चेदं स्पष्टतरमुपरिष्टात् ॥ ३२ ॥

उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्काह।

न व्यवस्थानुपपत्तेः ॥ ३३ ॥

सार्व्वलौकिकप्रमाणेन सिद्धस्यापि भ्रमत्वशङ्कायां प्रमा भ्रमव्यवहारविलोपः स्यादित्यर्थः ॥ ३३ ॥

समाप्तं सर्व्वनित्यत्वनिराकरणप्रकरणं ॥ ४७ ॥

अथ प्रसङ्गात्सर्व्वपृथक्त्वप्रकरणं तत्र पूर्व्वपक्षसूत्रं।

सर्व्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥

सर्व्ववस्तु पृथक् नाना लक्ष्यतेऽनेनेति लक्षणं समाख्या तस्याः पृथक्त्वं पृथगर्थकत्वं तथाच प्रयोगः घटादिः समूहरूपः वाच्यत्वात् सेनावनादिवत् अतीन्द्रिये गगणादौ मानाभावादात्मनः शरीरानतिरेकाद्गुणकर्म्मणोराश्रयाभेदाद्विशेषसमवाययोर्माना भावादभावस्य तुच्छत्वान्न व्यभिचारः यद्वा घटादिकं स्वस्मादपि पृथक्भावलक्षणानां गन्धरसादीनां तत्तदवयवादीनाञ्च पृथक्त्वात् घटादेश्च तदभेदादिति भावः ॥ ३४ ॥

समाधत्ते।

नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

अनेकलक्षणैरनेकस्वरूपैरुपरमादिभिस्तत्तदवयवैर्व्विशिष्टस्यैकस्यैव भावस्य निष्पत्तेरुत्पत्तेरित्यर्थः तथाचैकस्य

धर्म्मिणः प्रत्यक्षादिप्रमाणसिद्धत्वात् तस्य च परमाणुघटत्वरामनत्वा ४ अध्यायः
दिविरुद्धधर्म्माध्यस्तरूपरमाण्वात्मकत्वाभावादवयवानाञ्च का
रणत्वात् कार्य्यकारणयोरभेदासम्भवाच्च न तत्तदात्मकत्वं
घटादेः सम्भवतीति भावः ॥ ३५ ॥

हेतुमाह ।

लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

लक्षणस्य अर्थाद्भावानां घटपटादीनां व्यवस्थानाद्व्यवस्थित
त्वादेवाप्रतिषेधः पृथक्त्वव्यवस्थापनं नेत्यर्थः कपालसमवेत
द्रव्यत्वादिकं हि पटादेर्लक्षणं कपाले घट इत्यादिप्रतीतिसिद्धं
नचेदं समूहात्मकत्वे सम्भवति एवं लक्षणस्य घटादिस्वरूपस्य
यमहमद्राक्षं स्पृशामीति प्रत्यक्षेण व्यवस्थितत्वात् परमाणो
श्चाप्रत्यक्षत्वान्न तत्सम्भवः किञ्च समूहलक्षणव्यवस्थितेरेव नोक्तं
युक्तं समूहो हि नानाव्यक्तिसमुदायः स च नैकव्यक्तेरनभ्युपगमे
सिध्यतीति भावः ॥ ३६ ॥

समाप्तं सर्व्वपृथक्त्वनिराकरणप्रकरणं ॥ ४८ ॥

४ अध्यायः सर्व्वशून्यत्वेन कार्य्यकारणभावासम्भवइति तन्निराकरण प्रकरणमारभते तत्र ज्ञानविषयत्वमभावत्वव्याप्यं नवेति संशये पूर्व्वपक्षसूत्रं।

सर्व्वमभावोभावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

सर्व्वं विवादपदमभावस्तुच्छं तत्र प्रत्यक्षं मानमाह भावेष्विति भावत्वाभिमतेषु घटादिषु अभावत्वसिद्धेः घटः पटोनेत्यादि प्रतीत्या सर्व्वेषामभावत्वसिद्धेः ॥ ३७ ॥

सिद्धान्तसूत्रं।

न स्वभावसिद्धेर्भावानां ॥ ३८ ॥

भावानां पृथिव्यादीनां स्वभावस्य गन्धादेःसत्त्वादेश्च सिद्धेः नहि तुच्छस्य गन्धरूपादिकं सत्त्वेन प्रतीतिर्व्वा सम्भवति॥३८॥

पुनः शङ्कते।

न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

न हि सर्व्वेषां भावानामेकः स्वभावः सम्भवति आपेक्षिकत्वात् भिन्नत्वात् भिन्नस्य स्वभावत्वे स्वस्मादपि भेदापत्तेः यदा इतरसापेक्षत्वात् एतदपेक्षयाऽयं नीलतरएतदपेक्षया शुक्ल इतिप्रतीतिः यच्च सापेक्षन्तदवस्तु यथा जवासापेक्षं स्फटिका रुण्यं ॥ ३९ ॥

समाधत्ते।

आहृतत्वादयुक्तं ॥ ४० ॥

सापेक्षत्वस्य तुच्छत्वव्याप्तेर्व्याहततत्वादसिद्धत्वात् नवा घटादेः सापेक्षत्वं सम्भवति किञ्च सापेक्षत्वं सापेक्षं न वा आद्ये तस्य तुच्छत्वान्न साधकत्वं अन्त्ये तस्यैव सत्यत्वात् कुतः सर्व्वशून्यत्वमिति भावः ॥ ४० ॥

समाप्तं सर्व्वशून्यतानिराकरणप्रकरणं ॥ ४८ ॥

अथ संख्यैकान्तवादनिराकरणप्रकरणं तत्र भाष्यं अथेमे संख्यैकान्तवादाः सर्व्वमेकं सदविशेषात् सर्व्वं द्वेधा नित्यानित्यभेदात् सर्व्वं त्रेधा ज्ञाता ज्ञेयं ज्ञानमिति सर्व्वं चतुर्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति एवं यथासम्भवमन्येऽपि तत्र यथा नित्यत्वानित्यत्वलक्षणधर्म्माभ्यां द्वैधं तथा सत्त्वेनैकमिति स्पष्टोऽर्थः परन्त्वेवं व्याचक्षते एकमित्यद्वैतवादस्तथाच ब्रह्मैवैकं निर्विशेषं सत्यं सर्व्वमन्यन्मिथ्या यद्वा सर्व्वं प्रपञ्चजातं एकं द्वैतशून्यं सदविशेषात् घटः सन् पटः सन्निति प्रतीतेः घटाभिन्नसदभिन्नपटस्य घटाभेदसिद्धेः श्रुतिरपि एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चनेत्यादि अन्येऽपीत्यनेन रूपसंज्ञासंस्कारवेद

४ अध्यायः नानुभवाः पञ्चस्कन्धादिति सौत्रान्तिकादित्यादिसमुच्चयः एते स्वाक्षेपेषु सिद्धान्तसूत्रं ।

सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्यां ॥४१॥

सङ्ख्यैकान्ता न सिध्यन्ति कारणस्य प्रमाणस्यानुपपत्तेः उपपत्तौ वा न सङ्ख्यैकान्तः साधनस्य साध्यातिरिक्तस्यापेक्षितत्वात् ॥४१॥

आक्षिपति ।

न कारणावयवभावात् ॥४२॥

न सङ्ख्यैकान्तस्यासिद्धिः कारणस्य प्रमाणस्यावयवभावात् उक्तस्यैकदेशत्वादवयवावयविनोश्च भेदाभावः ॥४२॥

दूषयति ।

निरवयवत्वादहेतुः ॥४३॥

उक्तो हेतु र्न युक्तः सर्व्वस्यैव पक्षत्वेनावशिष्टस्याभावात्पक्षैकदेशस्य हेतुत्वाभावादिति भावः श्रुतिस्तु सङ्ख्यैकपरेति एतच्च नात्मभ्यं रोचते सत्त्वमेकस्य नित्यानित्यभेदाद्वैविध्यादेश्चाभ्युपगतत्वादन्यस्याप्यनुमानस्य नित्यानित्यसाधकत्वे विरोधा

भावात् कथमितरथा षट्पदार्थी सप्तपदार्थीच विरुध्येदिति ४ अध्यायः तस्मादद्वैतवादनिराकरणपरत्वएव प्रकरणं सङ्गच्छतइति संक्षेपः ॥ ४३ ॥

अथावसरतः फले परीक्षणीये संशयमाह ।

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

पाकादिक्रियायाः सद्यःफलकत्वस्य कृष्यादेः कालान्तर फलकत्वस्य दर्शनादग्निहोत्रहवनादेर्हिंसादेर्वा फलं साद्यस्कं कालान्तरीणं वेति संशयः ॥ ४४ ॥

तत्रैहिककीर्त्त्यकीर्त्त्यादीनामेव फलत्वसम्भवे नादृष्टादिक ल्पनमिति पूर्व्वपक्षे सिद्धान्तसूत्रं ।

न सद्यः फलं कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

कालान्तरोपभोग्यत्वेन प्रतिपादनादित्यर्थः स्वर्गोहि फलं श्रूयते सच दुःखासम्भिन्नसुखं न चैहिकं सुखं तथा एवं हिंसादे स्तन्नरकोपभोगः फलं श्रूयते नचेहतत्सम्भवइति भावः ॥ ४५ ॥

४ अध्यायः

शङ्कते।

कालान्तरेणानिष्पत्तिर्हेतुविनाशात्॥ ४६ ॥

कालान्तरेण तत्तत्कर्मणः फलं न सम्भवति हेतोस्तत्कर्मणोविनाशात्॥ ४६ ॥

समाधत्ते।

प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात्॥ ४७ ॥

स्वर्गादिनिष्पत्तेः प्राक् तद्द्वारं स्यात् दृष्टान्तमाह वृक्षफलवत् यथा मूलसेकादिनाशेऽपि तदधीनावयवोपचयादिद्वारबलेन फलोत्पत्तिस्तथा प्रकृतेऽपि यागादिनाशेऽपि तज्जन्यादृष्टरूपद्वारसत्त्वान्न स्वर्गाद्युत्पत्तिविरोधः॥ ४७ ॥

ननु कार्य्यकारणभावएव न विचारसहइत्याशङ्कते।

नासन्नसन्नसदसत्सदसतोर्वैधर्म्यात्॥ ४८ ॥

प्राङ्निष्पत्तेरित्यनुवर्त्तते फलमित्यर्थाद्वक्तव्यं तथा चोत्पत्तेः प्राक् फलं नासत् असतउत्पत्तौ शशशृङ्गादेरप्युत्पत्तिः स्यात् स्यात्‌च सिकतादावपि तैलं नवासत् सतउत्पत्तिविरोधात् [illegible]न सदसत्सदसतोः सत्त्वासत्त्वलक्षणवैधर्म्यात् [illegible]॥

प्रागुत्पत्तेरुत्पत्तिधर्म्मकमसदित्यद्धा उत्पादव्यय दर्शनात्॥ ४९ ॥

उत्पत्तिधर्म्मकं उत्पत्तिधर्म्मकत्वेनोपलभ्यमानं पटादिक मुत्पत्तेः प्रागसदिति अद्धा तत्त्वं उत्पादनाशयोः प्रमितत्वात् इदानीं घट उत्पन्न इदानीं घटो विनष्ट इति प्रत्ययात् सतस्तु नोत्पत्तिसम्भव उत्पन्नपुनरुत्पादप्रसङ्गात् यद्यपि नाशस्य तत्र हेतुत्वं तथाप्यनुत्पन्नभावस्य नाशायोगादुत्पादसाधकत्वेन नाश उक्तः॥ ४९ ॥

असत उत्पत्तौ नियमो न स्यादित्यत आह।

बुद्धिसिद्धन्तु तदसत्॥ ५०॥

तत्कार्य्यं असत् प्रागभावप्रतियोगिबुद्धिसिद्धं बुद्ध्या विषयी कृतं तथाहि इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रव र्त्तते न तु पटोऽस्तीति ज्ञात्वा तथा सति सिद्धत्वेन ज्ञात इच्छाऽ भावात् प्रवृत्त्यनुपपत्तेः सिकतादौ पटो भविष्यतीति न ज्ञायते किन्तु न भविष्यतीति न ज्ञायत एव कुत इति चेदनुभवसाक्षिकः किञ्च त्वन्मतेऽपि कुतो न ज्ञायते तत्र पटाभावादिति चेत् कथ मिदं निरणायि पटात्पूर्व्वं तन्तुसिकतयोस्तुल्यत्वात् तन्तुत्वेनाश्र यतेति चेत्तन्तुत्वेन कारणतेत्येवं स्यात् प्रवृत्त्यनुरोधात्॥ ५०॥

 नन्वस्तु हेतुफलभावस्तथापि वृक्षफलवदिति दृष्टान्तवैष म्यान्नादृष्टसिद्धिरित्याशयेन शङ्कते।

आश्रयव्यतिरेकात् वृक्षफलवदित्यहेतुः ॥ ५१ ॥

प्राङ्निष्पत्तेर्वृक्षफलवदित्यहेतुः कुतः आश्रयव्यतिरेकात् येन कायेन कर्म कृतं तस्य नाशात् वृक्षस्थले तु तस्य वृक्षस्य स त्त्वात् सलिलसेकादिकं परिकर्मोपयुज्यतइत्यभिमान. ॥ ५१ ॥

समाधत्ते।

प्रीतेरात्माश्रयत्वादहेतुः ॥ ५२ ॥

आश्रयव्यतिरेकादितिहेतुर्न युक्तः प्रीतेः सुखस्य स्वर्गि शरीरावच्छेदेन जायमानस्यात्मवृत्तित्वाद्यागादिसामानाधि करण्यादित्यर्थः ॥ ५२ ॥

क्वचित्सामानाधिकरण्यसम्भवेऽपि सर्व्वत्र न तथेति शङ्कते।

न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्द्दे शात् ॥ ५३ ॥

पुत्रादीनां फलनिर्द्देशात् सामानाधिकरण्यं न सम्भवतीति भावः ॥ ५३ ॥

यद्यपि पुत्रादीनामैहिकफलत्वात्तत्राश्रयव्यतिरेकाभावात् ४ अध्यायः शङ्कैव न तथापि यत्र जन्मान्तरीयधनादिकमपि फलं स्यात्तत्रापि नानुपपत्तिरित्याशयेनाह ।

तत्सम्बन्धात्फलनिष्पत्तेस्तेषु फलवदुपचारः॥ ५४ ॥

तत्सम्बन्धात्पुत्रादिसम्बन्धात्फलनिष्पत्तेः प्रीत्युत्पत्तेः तेषु पुत्रादिषु फलवदुपचारः फलत्वेन व्यपदेशः यथाऽन्नं वै प्राणिनां प्राणइति ॥ ५४ ॥

समाप्तं फलपरीक्षाप्रकरणं ॥ ५० ॥

अथ क्रमप्राप्तं दुःखं परीक्षणीयं तत्र च बाधनालक्षणं दुःखमित्युक्तं तदर्थस्तु दुःखत्वजातिमत्त्वमित्युक्तं तच्च शरीरादौ दुःखेऽव्याप्तमित्याशङ्क्याह ।

विविधबाधनायोगाद्दुःखं जन्मोत्पत्तिः ॥ ५५ ॥

जननयोगाज्जन्म शरीरादिकं तदुत्पत्तिस्तत्सम्बन्धः विविधबाधनायोगात् दुःखमिति व्यपदिश्यते न तु वास्तवमेव न तत् दुःखं तथाच विविधदुःखानुषक्ततया हेयत्वार्थं दुःखमिति भावनीयमुपदिश्यते ॥ ५५ ॥

४ अध्यायः ननु दुःखभावनेन किं सुखं प्रत्याख्यायते नचैतच्छक्यमत आह।

सुखस्याप्यन्तरालनिष्पत्तेः ॥ ५६ ॥

दुःखानां मध्ये सुखस्याप्युत्पत्तेस्तत्प्रत्याख्यानस्याशक्यत्वात् ॥ ५६ ॥

ननु सुखदुःखसम्बन्धाविशेषात् सुखभावनमेव किं नेष्यत इत्यत्राह।

बाधनानिवृत्तेर्वेदयतः पर्य्येषणदोषादप्रतिषेधः ॥ ५७ ॥

दुःखभावनस्य न प्रतिषेधः वेदयतः सुखसाधनत्वं जानतः पर्य्येषणदोषात् पर्य्येषणे सुखार्थप्रवर्त्तने दोषात् सुखार्थं प्रवर्त्तमानोहि अर्जनपालनादौ विविधाभिर्व्वाधनाभिरुपतप्यतेऽतोदुःखभावनं वैराग्यहेतुतयोपदिश्यते ॥ ५७ ॥

ननु दुःखमनुभवतः स्वतएव निवृत्तिसम्भवात् दुःखभावनोपदेशोव्यर्थइत्यतआह।

दुःखविकल्पेसुखाभिमानाच्च ॥ ५८ ॥

दुःखस्य विविधः कल्पोयच ताडशे प्रतिषिद्धहिंसाभोजन

मथुनादौ प्रवृत्तिर्माभूदित्ययमुपदेश इति भावः ॥ ५८ ॥ 

समाप्तं दुःखपरीक्षाप्रकरणं ॥ ५१ ॥

अथ क्रमप्राप्ततयाऽपवर्गः परीक्षणीयः तत्र च तदर्थकप्रवृत्तिकालाभावात्तदभावइति पूर्व्वपक्षयति ।

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥

ऋणाद्यनुबन्धादपवर्गानुष्ठानकालाभावादपवर्गाभावः स्यात् तथाच श्रूयते जायमानो हवै ब्राह्मणस्त्रिभिः ऋणवान्जायते ब्रह्मचर्य्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यइति ऋषिभ्यः ऋण्यृणेभ्यो ब्रह्मचर्य्येण मुच्यते देवेभ्यः देवर्णेभ्यः यज्ञेन मुच्यते प्रजया अपत्येन पितृभ्यः पितृणेभ्योमुच्यते ऋणापाकरणेनैव च जीवनापगमः तथाच श्रूयते तत्सत्रं यदग्निहोत्रं दर्शपौर्णमासौ च जरयाहवा एष तस्माद्विमुच्यते मृत्युनाचेति ऋणापाकरणमन्तरेण च नतत्र प्रवृत्तिः तथा च स्मर्य्यते ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानो ब्रजत्यधः एवं क्लेशानुबन्धादपि पुरुषोहि रागादिभिस्तत्तत्कर्म्माण्यारभमाणः क्लेशानुविद्ध एव दृश्यते तत्कथमपवर्गः एवं प्रवृत्त्यनुबन्धादपि पुरुषोहि वाग्बुद्धिशरीरैस्तत्तत्कर्म्माण्यारभमाणोधर्म्माधर्म्मौ यावज्जीवमुपार्जयन् कथमपवृज्यतामिति ॥ ५९ ॥

समाधत्ते ।

प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादोनिन्दाप्रशंसोपपत्तेः ॥ ६० ॥

जायमानइत्याद्यनुवादोहि न प्रधानशब्दः नहि जायमानः कर्म्मण्यधिक्रियते तथाच भाष्यं यदातु मातृतोजायते कुमारकोन तदा कर्म्मभिरधिक्रियते अर्थिनः शक्तस्य चाधिकारादिति जायमानइत्यनेन कोवाव्यावर्त्तनीयः नह्यजातस्य प्रसक्तिरस्ति येनासौ व्यावर्त्तनीयः तच्च भाष्यं जायमानइति गुणशब्दोविपर्य्ययेऽनधिकारादिति तथाच जायमानइत्यनेनोपनीतउच्यते तस्य ब्रह्मचर्य्यादावधिकारात् अग्निहोत्रादौ गृहस्थस्याधिकारः क्षौमे वसानोवाधीयतामिति श्रुतेः एवमृणशब्दोऽपि न मुख्यः नह्यत्र प्रत्यादेयं कश्चन ददाति परन्तु ऋणापाकरणवदावश्यकत्वख्यापनाय तथोक्तं लाक्षणिकशब्दप्रयोगे वीजमाह निन्दाप्रशंसोपपत्तेः ऋणानपाकरणतदपाकरणाभ्यामिवाग्निहोत्राद्यकरणतत्करणाभ्यां निन्दाप्रशंसे उपपद्येते नचानुष्ठानकालाभावः जरयाविमुच्यतइत्युक्तेः नच जरयाऽशक्तिरुपलक्ष्यते अन्तेवासी वायुज्यात् ब्रह्मणा हि स परिक्रीत इत्यादिनाऽशक्तस्यापि विधानात् तस्मादायुषश्चतुर्थभागोजरेत्युच्यते किञ्च जरामर्य्यवादः कामनाभिप्रायेण तथाच भाष्यं अर्थित्वस्य चापरिणामे

जरामर्य्यवादोपपत्तेरिति अर्थित्वं कामना तदपरिणामे तद ४ अध्यायः
माश्रे कर्म्मकरणाभिप्रायेण जरामर्य्यवाद उपपद्यते ॥ ६० ॥

ननु काम्यानां कामनाविरहेण त्यागसम्भवेऽपि नित्यानां कथं त्यागः श्रूयते हि यावज्जीवमग्निहोत्रं जुहुयादिति तत्राह।

समारोपादात्मन्यप्रतिषेधः ॥ ६१ ॥

अपवर्गप्रतिषेधोन युक्तः अग्नीनामात्मनि समारोपविधानात् श्रूयते प्राजापत्यामिष्टिं निरूप्य तस्यां सर्व्ववेदसं दत्वात्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेदिति अतएव चत्वारः पन्थानो देवयानादृति चातुराश्रम्यश्रुतिरपि सङ्गच्छते ॥ ६१ ॥

नन्वग्निहोत्रस्याप्रतिबन्धकत्वेऽपि तत्फलस्वर्ग एवापवर्गप्रतिबन्धकः स्यादत्राह।

पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥

ज्ञानिनः फलस्य स्वर्गस्याभावः अग्निहोत्रं हि पात्रचयान्तं पात्राण्यग्निहोत्रपात्राणि तेषां चयः प्रमीतस्य यजमानस्याङ्गेषु विन्यासः मुखे घृतपूर्णां स्रुचमिति क्रमेण भिक्षोस्तदनुपपत्तेः तेन तत्परित्यागात् अग्निहोत्रफलाभावेऽपि ज्योतिष्टोमगङ्गास्नानादिहिंसादिफलानां प्रतिबन्धकत्वं स्यादतो हेत्वन्तरसमुच्चयाय चकार उपन्यस्तस्तथाच प्रारब्धातिरिक्तकर्म्मणां ज्ञाना

४ अध्यायः देव चयइत्याशयः श्रूयते हि तथा विद्वान् पुण्यपापे विधूय निर ञ्जनः परमं साम्यमुपैति एवं चीयते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे। स्मर्य्यते ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात्कुरुते तथेति इत्यञ्च कामनाशून्यस्य प्रजानुत्पादोऽपि नापवर्गविरोधीतथा च श्रूयते एतदुहस्म वै पूर्व्वेब्राह्मणाअनूचानाविद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामोयेषां नोयमात्मालोकइति ते हस्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्तीति अन्ये तु फलाभावः फलस्य मुमुक्षून्प्रति अग्निहोत्रादौ प्रयोजकत्वाभावस्तथाश्रुति भिक्षूणामपि पात्र चयान्तं स्यादित्यर्थइत्याहुः ॥ ६२ ॥

क्लेशानुबन्धं दूषयति।

सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः ॥ ६३ ॥

स्वप्नादर्शनकाले सुषुप्तस्य यथा क्लेशाभावेन दुःखाभावस्त थाऽपवर्गेऽपि रागाद्यभावेन दुःखाभावः स्यात् ॥ ६३ ॥

प्रवृत्त्यनुबन्धादपवर्गाभावं दूषयति।

न प्रवृत्तिः प्रतिसन्धानायहीनक्लेशस्य ॥ ६४ ॥

क्लिश्यन्तेऽनेनेति क्लेशोरागादिः तद्विरहितायाप्रवृत्तिः सा प्रतिसन्धानाय प्रतिबन्धाय न भवति धर्माधर्मौ न जनय तीत्यर्थः ॥ ६४ ॥

क्लेशाभावमसहमानः शङ्कते ।

न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६५ ॥

क्लेशसन्ततेरुच्छेदो न युक्तः स्वाभाविकत्वात् ॥ ६५ ॥

एकदेशी समाधत्ते ।

प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वं अणुश्यामताऽनित्यत्ववद्वा ॥ ६६ ॥

प्रागुत्पत्तेरभावानित्यत्ववत्प्रागभावानित्यत्ववत् अनादेः परमाणुश्यामतायाविनाशवद्वा विनाशः ॥ ६६ ॥

अनित्यत्वं विनाशिभावत्वं नच तत्प्रागभावे नवाऽणुश्यामतादिरनादिस्तथाचभाव्यं अनादिरणुश्यामतेति ह्यभावाद युक्तमित्यतोमतद्वयमुपेक्ष्य सिद्धान्तमाह ।

न सङ्कल्पनिमित्तत्वाद्रागादीनां ॥ ६७ ॥

नोक्तं युक्तं कुतोरागादीनां सङ्कल्पनिमित्तत्वात् संकल्पो मिथ्याज्ञानं निमित्तं येषां तथाच तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तौ रागादिनिवृत्तिर्युज्यतएवेति भावः ॥ ६७ ॥

समाप्तमपवर्गपरीक्षाप्रकरणं ॥ ५२ ॥

समाप्तं चतुर्थाध्यायस्य प्रथममाह्निकं ॥ १ ॥

४ अध्यायः अथ शास्त्रस्य परमं प्रयोजनमपवर्गः सचोद्दिष्टोलक्षितः परीक्षितोऽप्यकिञ्चित्करः कारणानिरूपणात् नन्वभिहितमेव दुःखादिसूत्रे कारणनाशक्रमेण दुःखाभावोऽपवर्गः इतीति चे त्सत्यं मिथ्याज्ञानापगमहेतुर्नाभिहितः तत्त्वज्ञानं तत्रहेतुरि तिचेत्कस्य तत्त्वं ज्ञातव्यमित्यभिधानीयमित्याशयेन तत्त्वज्ञा नपरीक्षा सैव चाह्निकार्थः तत्र च षट्प्रकरणानि आदौ तत्त्व ज्ञानोत्पत्तिप्रकरणं अन्यानि च यथायथं वक्ष्यन्ते तत्र सिद्धा न्तसूत्रं।

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः॥६८॥

अहङ्कारोऽहमित्यभिमानः सच शरीरादिविषयकोमि थ्याज्ञानमुच्यते तच्च दोषनिमित्तानां शरीरादीनां तत्त्वस्य अनात्मत्वस्य ज्ञानान्निवर्त्तते आत्मत्वेन हि शरीरादौ मुह्यन् रञ्जनीयेषु रज्यति कोपनीयेषु कुप्यति केचित्तु दोषनिमि त्तानां रागादीनां तत्त्वज्ञानाद्बलवदनिष्टानुबन्धित्वज्ञानादहं कारस्याभिलाषस्य निवृत्तिरित्यर्थः इत्याहुः ॥ ६८ ॥

ननु के तावदनुरञ्जनीयाविषयाः येषु रज्यन्संसरतीत्यतो विवेकाय तानुपदिशति।

दोषनिमित्तं रूपादयोविषयाः सङ्कल्पकृताः॥६९॥

सङ्कल्पः समीचीनत्वेन भावनं तद्विषयीकृताः रूपादयः

दोषस्य रागादेर्निमित्तं सुन्दरीयमिति जानन् रज्यति यत्तु ४ अध्यायः
रयमिति 'दृष्टि ते रूपादयो हेयत्वेन भावनीयाः प्रथमं ततः
शरीरात्मविवेकः ॥ ६८ ॥

ननु सौन्दर्य्यादिकं पश्यतो रागादिर्ब्रह्मणोऽपि दुष्परिहरः
तदुक्तं चञ्चलं हि मनः कृष्ण प्रमाथिबलवद्दृढमित्यतो रागादि
निवृत्त्युपायं दर्शयिष्यन्नाह ।

तन्निमित्तन्त्ववयव्यभिमानः ॥ ७० ॥

अवयविनि तरुण्यादिशरीरे अभिमानः सपरिष्कारबुद्धि
स्तन्निमित्तं रागादिनिमित्तं तथाच सा बुद्धिर्हेया अतएव
भार्यादौ परिष्कारबुद्धिरनुरञ्जनसंज्ञा सा हेया दोषदर्शन
मशुभसंज्ञा सा भावनीयेति अनुरञ्जनसंज्ञायथा खेलत्ख
ञ्जननयना परिणतबिम्बाधरा पृथुश्रोणी। कमलमुकुलस्तनीयं
पूर्णेन्दुमुखी सुखाय मे भवितेति अशुभसंज्ञा यथा चर्म्मनिर्म्मित
पात्रीयं मांसासृक्पूयपूरिता अस्यां रज्यति यो मूढः पिशाचः
कस्ततोऽधिकः । स्वशरीरादौ अप्यशुभसंज्ञैव भावनीया एवं
कोपनीयेऽपि शुभसंज्ञा । मां द्वेष्ट्यसौ दुराचारदृष्टादिषु
यथंछतः। कण्ठपीठं कुठारेण छित्वास्य स्यां सुखी कदा। अशुभ
संज्ञा तु मांसासृक्कीकसमयोदेहः किं मेऽपराध्यति एतस्माद
परः कर्त्ता कर्त्तनीयः कथं मयेति ॥ ७० ॥

समाप्तं तत्त्वज्ञानोत्पत्तिप्रकरणं ॥ ५९ ॥

४ अध्यायः अथ प्रसङ्गादवयविप्रकरणं वस्तुतस्तु शरीरे धर्म्मद्वयस्य सम्बन्धेऽपि एकं ध्येयमपरं हेयमिति निर्युक्तिकं अतोऽवयवी नास्ति किन्तु परमाणुपुञ्ज इति तत्त्वं तदेव तन्मुमुक्षुभिर्भावनीयं परमाणुपुञ्ज इत्यप्यापाततः परमाणोरप्यग्रे निराकरिष्य माणत्वादिति सौगतशङ्कामपाकर्त्तुमयमारम्भः यद्यपि द्वितीयाध्याये व्यवस्थापित एवावयवी तथापि स्वयुक्तिदार्ढ्येन सौत्रान्तिकस्य वैभाषिकस्य चात्र प्रत्यवस्थानमिति तत्र संशय प्रदर्शनाय सूत्रं।

विद्याविद्याद्वैविध्यात्संशयः ॥ ७१ ॥

संशय इत्यस्य अवयविनीत्यादिः अवयविनः प्रत्यक्षसिद्ध त्वात्तदपलापोऽशक्य इत्यतउक्तं विद्येति प्रमाभ्रमभेदेन ज्ञानद्वैविध्यात् ज्ञानत्वलक्षणसाधारणधर्म्मदर्शनात् ज्ञाने प्रामाण्यसंशयादवयविनि संशय इत्यर्थः ॥ ७१ ॥

समाधत्ते।

तदसंशयः पूर्व्वहेतुप्रसिद्धत्वात् ॥ ७२ ॥

तत्रावयविनि नसंशयः पूर्व्वहेतुप्रसिद्धत्वात् द्वितीयाध्या योक्तयुक्तिभिरवयविनः प्रकर्षेण सिद्धत्वात् ॥ ७२ ॥

अवयविनि बाधकं शङ्कते। 

वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिः ॥ ७३ ॥

अपिरवधारणे तर्हि संशयानुपपत्तिर्वृत्त्यनुपपत्तितोऽवयव्यभावादेव स्यादित्यर्थः वृत्त्यनुपपत्तिं विवृणोति भाष्यकारः कार्त्स्न्यैकदेशवृत्तित्वादवयवानामवयव्यभावः अवयवी हि एकैकावयवे कार्त्स्न्येन एकदेशेन वा नाद्यः विषमपरिमाणत्वात् अन्त्येऽपि तेनैवावयवेनान्येन वा नाद्यः स्वस्मिन्वृत्तिविरोधात् नान्यः अवयवान्तरस्यावयवान्तरावृत्तेः तथापि कथमवयव्यभावइत्यत आह्य तेषु चावृत्तेरवयव्यभावः तेषु अवयवेषु पूर्वोक्तयुक्त्या अभावादवयवी नास्ति नह्यसावृत्तिस्थाऽभ्युपेयतइति भावः सूत्रमेवेदमित्यपि वदन्ति ॥ ७३ ॥

नन्वास्तामवृत्तिरेवाऽवयवीति शङ्कायां पूर्वपक्षिसूत्रं।

पृथक्चावयवेभ्योऽवृत्तेः ॥ ७४ ॥

अवयवेभ्यः पृथक् अवयवी नास्तीति शेषः तेषुचावृत्तेरित्यस्य सूत्रस्थले अवयव्यभावइत्यनुवर्त्तते कुतःअवृत्तेः वृत्त्यभावेऽवयविनोनित्यत्वप्रसङ्गः नच नित्योऽवयव्युपलभ्यते ततोनास्त्येवावयवीति भावः यदा कार्त्स्न्यैकदेशाभ्यामवयवी न वर्त्तते किन्तु स्वरूपेणैवेति शङ्कायां पूर्वपक्षिणः सूत्रं पृथगिति अवयवेभ्यः पृथगवयवी नास्ति कुतः अवृत्तेः अवृत्तित्वप्रसङ्गात् तथा सति

४ अध्यायः नित्यं स्यादिति भावः कश्चित्तु अवयवातिरिक्तोऽवयवी वर्त्तेता मित्यत्र पूर्व्वपक्षिणः सूत्रं पृथगिति पूर्व्वोक्तयुक्त्याऽवयवेभ्यः पृथगप्यवृत्तेः ॥ ७४ ॥

नन्ववयवावयविनोस्तादात्म्यमेव सम्बन्धः स्यादत्राह ।

न चावयव्यवयवाः ॥ ७५ ॥

नहि तन्तुः पटस्तम्भो गृहमिति कश्चित्प्रत्येति नवाऽभेदेनाधाराधेयभावउपपद्यते ॥ ७५ ॥

सिद्धान्तसूत्रं ।

एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ७६ ॥

अवयवी कार्त्स्न्येन एकदेशेन वा वर्त्ततइति प्रश्नोन युक्तः एकस्मिन्नवयविनि भेदाभावाद्भेदनियतशब्दप्रयोगस्यायुक्तत्वात् अनेकस्याशेषता हि कार्त्स्न्यं समुदायिनां किञ्चित्त्वमेकदेशत्वंनचैकस्य तत्सम्भवइति भावः ॥ ७६ ॥

दृष्टान्तद्वारा बाधकान्तरमाह ।

अवयवान्तरभावेऽप्यवृत्तेरहेतुः ॥ ७७ ॥

अवयवी स्वावयवेषु नैकदेशेन वर्त्तते अवयवान्तराभावा

दिति यः परेषां हेतुः स न युक्तः कुतः अवयवान्तरभावेऽप्य ४ अध्यायः
वृत्तेः अवयवान्तरसत्त्वेऽपि तस्यैव परं वृत्तिरायाति न त्ववय
विनोऽपीति यद्वा अवृत्तेर्वर्त्तनाभावस्य कृत्स्नैकदेशविकल्पेन
हेतुः कुतः अवयवान्तरस्य अवयविभिन्नस्य अवयवस्य भावेऽपि
सत्त्वेऽपि सम्भवात् घटत्वादिवत् स्वरूपेणैवावयविनो वृत्तेः सम्भ
वात् वृत्तेः कृत्स्नैकदेशान्यतरनियमो घटत्वादौ व्यभिचार्य्यप्रयो
जकस्येति भावः ॥ ७७ ॥

तदसंशयः पूर्व्वहेतुप्रसिद्धत्वादित्यनेन सर्व्वाग्रहणमवय
व्यसिद्धेरिति पूर्व्वोक्तयुक्तिः स्मारिता पूर्व्वपक्षी तां दूषयितुमुप
क्रमते ।

**केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ ७८ ॥**

यथा तैमिरिकस्य तिमिरग्रस्तचक्षुषोऽनेकः केशः प्रत्यक्षः
किन्तु तत्समूहः एवमेकः परमाणुरप्रत्यक्षः तत्समूहरूपो घ
टादिः प्रत्यक्षः स्यात् ॥ ७८ ॥

उत्तरयति ।

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावात् विषयग्रहणस्य तथाभावो नाविषये वृत्तिः ॥ ७९ ॥**

इन्द्रियाणां पाटवे विषयग्रहणस्य पाटवं प्रकर्षः इन्द्रियाणां

४ अध्यायः माान्द्ये तद्ग्रहणस्य मान्द्यमपकर्षः नतु पटुतरं चक्षुः शब्दं गृह्णाति तदिदमुक्तं स्वविषयानतिक्रमेणेति फलितार्थमाह नाविषये वृत्तिरिति तथाच स्वाविषयं परमाणुं समूहत्वापन्न मपि कथं चक्षुर्गृह्णीयादिति भावः ॥ ७९ ॥

दोषान्तराभिधानाय सूत्रं।

अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ॥ ८० ॥

एवमुक्तप्रकारेण वृत्तिविकल्पदोषोऽवयविन्यवयवे च प्रसक्तः आप्रलयात् प्रलयोऽभावस्तथाच सर्व्वाभावएव स्यान्न कस्यापि ग्रहणमिति साधकं सर्व्वाग्रहणमवयव्यसिद्धेरिति ॥ ८० ॥

अस्तु सर्व्वाभावइत्यत्राह।

न प्रलयोऽणुसद्भावात् ॥ ८१ ॥

आश्रयनाशाद्यभावेन परमाणोर्नाशाभावेन तत्सम्भवात् यदा नन्ववयवावयविप्रवाहस्त्वया प्रलयपर्य्यन्तं स्वीकार्य्यः प्रलये च निखिलपृथिव्यादिनाशात्पुनः सर्गोन स्यादित्याशयेन शङ्कते अवयवेति समाधत्ते नेति न सकलपृथिव्यादिनाशः परमाणुसद्भावादित्यर्थः ॥ ८१ ॥

परमाणुरेव कइत्यत आह । 

परम्वात्रुटेः ॥ ८२ ॥

त्रुटेः परं यदतिसूक्ष्मं तत्परमाणुः वाशब्दोऽवधारणे अथ वा त्रुटेरवयवस्तदवयवोवा परमाणुरिति विकल्पार्थोवाशब्दः यद्वा त्रुटेः परं सूक्ष्मं परमाणुः त्रुटावेव वा विश्रामइति विकल्पोऽभिमतः ॥ ८२ ॥

समाप्तमवयवावयविप्रकरणं ॥ ५४ ॥

अथ विश्वस्य शून्यत्वात् क परमाणुसम्भावनेति मतनिराकरणाय निरवयवप्रकरणं तत्र पूर्व्वपक्षसूत्रं ।

आकाशव्यतिभेदात्तदनुपपत्तिः ॥ ८३ ॥

तस्य निरवयवस्याणोरनुपपत्तिः कुतः आकाशव्यतिभेदात् अन्तर्वहिराकाशसमावेशात् तथाच सावयवस्ततश्चानित्य इति ॥ ८३ ॥

अथ नाकाशव्यतिभेदस्तर्हि आकाशमसर्व्वगतं स्यादित्याह ।

आकाशासर्व्वगतत्वं वा ॥ ८४ ॥

स्यादितिशेषः ॥ ८४ ॥

अध्यायः

समाधत्ते ।

अन्तर्वहिरिति कार्य्यद्रव्यस्य कारणान्तरवच नादकार्य्ये तदभावः ॥ ८५ ॥

अन्तःशब्दोवहिःशब्दश्च कार्य्यद्रव्यस्यावयवविशेषवाची न चाकार्य्येऽवयवसम्भवद्त्यर्थः वहिरिति दृष्टान्तार्थं ॥ ८५ ॥

आकाशस्यासर्व्वगतत्वं स्यादित्यचाह ।

शब्दसंयोगविभवाच्च सर्व्वगतं ॥ ८६ ॥

शब्दस्य संयोगस्य च योविभवः अथवा शब्दजनकसंयोगस्य योविभवः सार्व्वचिकत्वं तस्मात्पुनः सर्व्वगतं आकाशमिति शेषः सर्व्वदेशे शब्दोत्पत्त्या तज्जनकसंयोगानुमानात् सर्व्वमूर्त्तसंयोगित्वरूपसर्व्वगतत्वं तस्य सिद्धं ॥ ८६ ॥

आकाशस्य सर्व्वसंयोगित्वे व्यूहनविष्टम्भौ स्यातामतआह ।

अव्यूहाविष्टम्भविभुत्वानि आकाशधर्म्माः ॥ ८७ ।

व्यूहः प्रतिहतस्य परावर्त्तनं विष्टम्भउत्तरदेशगतिप्रतिबन्धः आकाशे तयोरभावः निःस्पर्शत्वात् विभुत्वं सर्व्वगतत्वं यद्येते सूत्रे शून्यतावादिमते न संगच्छेते आकाशादेस्तैरनभ्युपगमात्तथापि स्वमतदति पूरयित्वा व्याख्येये ॥ ८७ ॥

पूर्व्वपक्षी युक्त्यन्तरमाग्रहते। 

मूर्त्तिमताञ्च संस्थानोपपत्तेरवयवसद्भावः ॥८८॥

परमाणोरिति शेषः हेतुमाह संस्थानोपपत्तेः संस्थानव त्त्वात् परमाणुर्हि परिमण्डलाकारः संस्थानवत्त्वे मानं भङ्ग्या वदति मूर्त्तिमतामिति मूर्त्तत्वात्संस्थानवत्त्वमित्यर्थः चः पूर्वो क्तहेतुं समुच्चिनोति मूर्त्तत्वस्य हेतुत्वसमुच्चयार्थो वा चकारः ॥ ८८ ॥

युक्त्यन्तरमाह ।

संयोगोपपत्तेश्च ॥ ८९ ॥

अवयवसद्भाव इत्यनुवर्त्तते संयोगवत्त्वादिति हेत्वर्थः संयो गवत्त्वात् कथं सावयवत्वमिति चेत् इत्थं संयोगस्याव्याप्यवृत्ति त्वादव्याप्यवृत्तित्वस्यावच्छेदकभेदं विना नोपपद्यते अवच्छेद कश्चावयवइति ननु परमाण्ववयवेऽप्ययं दोषः स्यात्तथाचान वस्थितपरम्पराप्रसङ्गइति चेत् त्यज तर्हि परमाणुव्यसनं स्वीकुरु शून्यतावादं निरवयवमाकाशादिकमपि नास्तीति भावः ॥ ८९ ॥

समाधत्ते।

अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रति षेधः ॥ ९० ॥

पूर्व्वोक्तयुक्त्या परमाणोर्निरवयवत्वप्रतिषेधोन युक्तः कुत

अध्याय: अनवस्थाकारित्वात् प्रामाणिकीयमनवस्था स्यादत आह अनवस्थानुपपत्तेश्चेति सर्व्वेषामनवस्थितावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणत्वापत्तिरित्यश्च तत्संयोगावच्छेदकादिविभागा न वा शून्यतायुक्ता निष्प्रमाणत्वात्प्रमाणसत्त्वे शून्यत्वविरोधात् निष्प्रमाणकशून्यताऽभ्युपगमे किमपराद्धं पूर्णतयेति दिक् ॥ ९० ॥

समाप्तं निरवयवप्रकरणं ॥ ५५ ॥

ननु वाह्यार्थाभावात् कुतोऽवयवावयविव्यवस्थेति मतमपाकर्त्तुं वाह्यार्थभङ्गनिराकरणमारभते प्रमेयत्वं ज्ञानत्वव्याप्यं नवेति संशय: तत्र पूर्व्वपक्षसूत्रं ।

बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् ॥ ९१ ॥

तु: प्रकरणविच्छेदार्थ: भावानां बुद्ध्या विवेचनादभेदोल्लेखात् याथात्म्यस्य ज्ञानभेदलक्षणस्यानुपलब्धिरनुपपत्ति: घट इति ज्ञानं मम जातमिति ह्यनुभूयते तत्र घट इति ज्ञानमित्यनेन ज्ञानघटयोरभेद उल्लिख्यते ततोन ज्ञानातिरिक्तो विषय: यथा पटे विविच्यमाने तन्तूनामेवापकर्षणादावतिरिक्तं न वस्तु एवं तन्तुरपि नांशुव्यतिरिक्त इति घटत्वादिस्तु ज्ञानस्यैवाकारविशेष इति भाव: ॥ ९१ ॥

समाधत्ते । 

व्याहतत्वादहेतुः ॥ ९२ ॥

उक्तोहेतुर्न युक्तः व्याहतत्वात् नहि बुद्ध्या विवेचने पटस्य तन्तुरूपता सिध्यति तन्तुतः पटइति हि प्रतीयते न तु तन्तुः पट इति एवं पटेन प्रावरणं न तु तन्तुभिः किञ्च तन्तुपटविवेचनादेव बाह्यार्थसिद्धिः ज्ञानेन तु स्वस्मिन् पटाभेदोनोल्लिख्यते स्वाविषयकत्वादनुव्यवसायेन तु पटविषयकत्वं व्यवसाये समुल्लिख्यते ॥ ९२ ॥

ननु तन्तुपटयोर्भेदे पार्थक्येन ग्रहणं स्यादित्यत्राह ।

तदाश्रयत्वादपृथग्ग्रहणं ॥ ९३ ॥

पृथग्ग्रहणं यदि तन्त्वविषयकप्रत्यक्षविषयत्वं पटस्यापाद्यते तत्रोत्तरं तदाश्रयत्वादिति पटोहि तन्त्वाश्रितः तेन सामग्रीसत्त्वात्पटप्रत्यक्षस्य तन्तुविषयकत्वं यदि च भेदप्रत्ययआपाद्यते तदा भवत्येवेति भावः ॥ ९३ ॥

ननु ज्ञानस्योभयवादिसिद्धत्वात्तन्मात्रपदार्थकल्पने लाघवात्तदतिरिक्तपदार्थाभावसिद्धिः स्यादित्यतआह ।

प्रमाणतश्चार्थप्रतिपत्तेः ॥ ९४ ॥

पूर्वोक्तहेतुं समुच्चिनोति चकारः अर्थस्य घटादेः प्रतिपत्तेः

४ अध्याय: प्रमाणाधीनत्वात् तथाच प्रामाणिकेऽर्थे गौरवं न बाधकमिति भावः अन्यथा ज्ञानमपि न सिध्येद्गौरवादिति शून्यतापत्तिः ॥ ९४ ॥

नवा बाह्यार्थाभावसाधनं सम्भवतीत्याह।

प्रमाणोपपत्त्यनुपपत्तिभ्यां ॥ ९५ ॥

व्याघातान्न बाह्याभावइति शेषः बाह्यं नास्तीत्यत्र यदि प्रमाणमस्ति तदा प्रमाणस्य बाह्यस्य सत्त्वान्न बाह्याभावः अथ नास्ति तदा निष्प्रमाणकत्वान्न तत्सिद्धिरित्यर्थः किञ्च घटादौ यदि प्रमाणमस्ति तदा ततएव बाह्यार्थसिद्धिः अथा प्रमाणं तदा कथं घटइति ज्ञानस्य घटाकारत्वं मन्यसे ज्ञान स्यैवानुत्पत्तेरिति ॥ ९५ ॥

ननु प्रमाणप्रमेयव्यवहारोन पारमार्थिकः परन्तु विज्ञा नानि तत्तदाकारकाणि वासनापरिपाकवशादेव स्वाप्नप्रत्यय वदैन्द्रजालिकप्रतीतिवच्चाविर्भवन्तीत्याशयेन शङ्कते सूत्राभ्यां

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ९६ ॥

मायागन्धर्व्वनगरमृगतृष्णावद्वा ॥ ९७ ॥

स्पष्टं ॥ ९७ ॥

हेत्वभावादसिद्धिः ॥ ९८ ॥

वाह्याभावस्यासिद्धिः हेत्वभावात् प्रमाणाभावात् अथवा हेतोश्चक्षुरादेरनभ्युपगमे घटोऽयमित्यादिज्ञानानामसिद्धिरित्यर्थः नच वासनावशात्स्यादिति वाच्यं वासनायाश्चातिरिक्तत्वे वाह्योपगमप्रसङ्गात् वासनायाः सन्तन्यमानतया चाक्षुषादेरपि सन्तानापत्तिरिति दिक् ॥ ९८ ॥

नन्वसद्विषया अहेतुका अपि स्वाप्नप्रत्ययादय इव भावना प्रत्यया इव परेऽपि प्रत्यया भवेयुरित्यत आह।

स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ९९ ॥

पूर्व्वोपलब्धविषय इति शेषः सङ्कल्प उपनीतभानं यथा स्मृत्यादिः पूर्व्वोपलब्धविषयकः तथा स्वाप्नप्रत्ययोऽपीति न निर्व्विषयकः नच स्वप्ने स्वमपि खादति निजशिरःखण्डनमपि पश्यति नत्विदं पूर्व्वोपलब्धमिति वाच्यं स्वस्य खादनस्य च निजशिरसः खण्डनस्य च पूर्व्वोपलब्धत्वात्संसर्गभानस्य च भ्रान्तत्वात् नवाऽहेतुकत्वं स्मृत्यादिदृष्टान्तेन संस्कारस्य स्मृतेश्च स्मृतौ विशिष्टबुद्धौ च हेतुत्वस्याभिमतत्वात् तच भ्रमे दोषः कालविशेषोऽदृष्टविशेषो दोषो वेत्यन्यदेतत् ॥ ९९ ॥

४ अध्याय: ननु भ्रमस्यापि यद्विषयकत्वे तत्प्रतिरोधः कथं स्यादित्यात आह ।

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ १०० ॥

मिथ्योपलब्धेर्मायागन्धर्वनगरादिज्ञानस्य तत्त्वज्ञानादनारोपितवस्तुप्रत्ययाद्विनाशः प्रतिरोधः भ्रमत्वज्ञानं वा एवं स्वप्नप्रत्ययस्यापि दर्पणमुखविभ्रमस्य तत्त्वज्ञानेनाप्रतिरोधेऽपि भ्रमत्वज्ञानं भवत्येवेति भावः ॥ १०० ॥

माध्यमिकस्तु वाह्यासत्त्वं प्रसाध्यते तद्दृष्टान्तेन बुद्धेरप्यसत्त्वं साधयति तं प्रत्याह ।

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ १०१ ॥

एवं वाह्यवद्बुद्धेरपि न प्रतिषेधः निमित्तसद्भावोपलम्भात् सहेतुकत्वस्य प्रमितत्वात् नह्यलीकं सहेतुकं सम्भवति अहेतुकत्वे च कादाचित्कत्वव्याकोपः केचित्तु भ्रमस्य सद्विषयत्वे प्रमात्वं स्यादित्यचाह बुद्धेरिति एवं प्रमात्वं निमित्तस्य प्रकारस्य सद्भावः सत्त्वं यत्र तथाच शुक्तिरजतयोः सत्यत्वेऽपि शुक्तौ रजतत्ववैशिष्ट्याभावान्न तद्बुद्धेः प्रमात्वमिति भावइत्याहुः अत्र चोपलम्भपदमनतिप्रयोजनकं ॥ १०१ ॥

यथा मिथ्याबुद्धिदृष्टान्तेन ज्ञानमात्रस्याप्रमात्वविषयकत्वं ४ अध्याय: सद्विषयकत्वाभावोवा सम्भवतीत्याह।

**तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः॥१०२॥**

तत्त्वं धर्मिस्वरूपं प्रधानं आरोप्यं तथाच भ्रमे धर्म्यंशे प्रमात्वमारोप्यरजतत्वाद्यंशे च भ्रमत्वमिति दृष्टान्तासिद्धि रिति भावः केचित्तु प्रमात्वाप्रमात्वयोर्विरोधान्नैकत्र समावेश इत्यतआह तत्त्वेति तथाच विषयभेदान्न विरोधइति भाव इत्याहुः॥१०२॥

समाप्तं वाह्यार्थभङ्गनिराकरणप्रकरणं॥५६॥

ननु शास्त्राधीनं तत्त्वज्ञानं क्षणिकमतस्तन्नाशे मिथ्याज्ञानं स्यादेव नहि तादृशं किञ्चिदेव ज्ञानं दृढभूमिसवासनमिथ्याज्ञानसमुन्मूलनक्षमम तस्तत्त्वज्ञानविवृद्धिप्रकरणमारभते तत्त्वज्ञानविवृद्धिस्तत्त्वज्ञानवासना ततश्चात्यन्तिको मिथ्याज्ञाननाशः तत्र तत्त्वज्ञानविवृद्धौ हेतुमाह।

**समाधिविशेषाभ्यासात्॥१०३॥**

समाधिः चित्तस्याभिमतविषयनिष्ठत्वं तस्य प्रकर्षो विषयान्तरानभिष्वङ्गलक्षणस्तस्याभ्यासात् पौनःपुन्यात् तत्त्वज्ञानविवृद्धिः तदेव च निदिध्यासनमामनन्ति तत्त्वज्ञानविवृद्धा च मिथ्याज्ञानवासनातिरोभावस्तथाच योगसूत्रं तज्जःसंस्कारो

४ अध्यायः ऽन्यसंस्कारप्रतिबन्धी प्रतिबन्धः कार्य्याक्षमतासम्पादनं विना शेवा ॥ १०३ ॥

ननु रागादिभिः प्रतिबन्धात् समाधिरेव नोदेतीत्याचि मति सूत्राभ्यां।

नार्थविशेषप्राबल्यात् ॥ १०४ ॥

क्षुधादिभिः प्रवर्त्तनाच्च ॥ १०५ ॥

अर्थविशेषस्य तनयवनितादिरागस्य प्राबल्याच्चिरकाला नुबन्धात्तदनुसन्धानमवर्ज्जनीयमिति तदभावः स्याच्च घन गर्जितादिज्ञानेन प्रतिबन्धः एवं क्षुत्तृष्णाभयादिभिः प्रतिरुद्ध स्तदुपशमाय प्रयतेत ॥ १०४ ॥ १०५ ॥

परिहरति।

पूर्व्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ १०६ ॥

जन्मान्तरकृतसमाधिजन्यसंस्कारवशात् समाधिरित्यर्थः अतएव चानेकजन्मसंसिद्ध इत्यादि सङ्गच्छते वयन्तु पूर्व्वकृतस्य प्रथमतः कृतस्येश्वराराधनस्य फलं धर्म्मविशेषस्तत्सम्बन्धादि त्यर्थः तथाच योगसूत्रं समाधिसिद्धिरीश्वरप्रणिधानात् सूत्रा न्तरञ्च तत्रैव ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च तत्ईश्वरप्रणिधानात् विषयप्रातिकूल्येन चित्तावस्थानं प्रत्यू हाभावस्येत्यर्थः ॥ १०६ ॥

योगाभ्यासस्थानमुपदिशति ।

अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशात् ॥ १०७ ॥

तत्र स्थिरचित्तता स्यादिति भावः इदं न सूत्रं किन्तु भाष्यमिति केचित् ॥ १०७ ॥

तटस्थः शङ्कते ।

अपवर्गेऽप्येवंप्रसङ्गः ॥ १०८ ॥

एवं प्रसङ्गः अर्थविशेषप्राबल्यादिविषयावभासप्रसङ्गः ॥ १०८ ॥

समाधत्ते ।

न निष्पन्नावश्यम्भावित्वात् ॥ १०९ ॥

निष्पन्नस्य शरीरादेः अवश्यम्भावित्वात् कारणत्वात् ज्ञानादिव्यतिशेषः ॥ १०९ ॥

ननु किमेतन्नवर्तत्यतआह ।

तदभावश्चापवर्गे ॥ ११० ॥

तस्य शरीरादेरभावः तदारम्भकधर्माधर्मविरहादिति भावः ॥ ११० ॥

४ अध्यायः ननु समाधिमात्रादेव निष्पन्नोऽपवर्गः स्यात् साधनान्तरं वाऽपेक्षणीयमतआह यद्वा समाधिसाधनान्याह।

तदर्थं यमनियमाभ्यामात्मसंस्कारोयोगाच्चाध्यात्मविध्युपायैः ॥ ११॥

तदर्थमपवर्गार्थमिति भाष्यादौ तदर्थं समाध्यर्थमिति वा यमानाह योगसूत्रं अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहायमाः नियमानाह शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः स्वाध्यायः स्वाभिमतमन्त्रजपः निषिद्धानाचरणतत्तदाश्रमविहिताचरणे यमनियमावित्यन्ये आत्मसंस्कारः आत्मनोऽपवर्गाधिगमक्षमता ननु यमनियमावेव साधने उताहो अन्यदस्तीत्यतआह योगादिति आत्मविधिः आत्मसाक्षात्कारविधायकवाक्यं आत्मावा अरे द्रष्टव्यआत्मानं चेद्विजानीयादित्यादि योगादिति प्रतिपाद्यत्वं पञ्चम्यर्थः तथाच योगशास्त्रोक्तात्मतत्त्वाधिगमसाधनैश्चात्मसंस्कारः कर्त्तव्यइत्यर्थः तथाच योगसूत्रं योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः तदर्थञ्च योगाङ्गानां यमनियमादीनां अनुष्ठानाच्चित्तस्याशुद्धेरविद्यादिरूपस्य क्षये सति ज्ञानस्य दीप्तिः प्रकर्षः सच विवेकख्यातिपर्य्यन्तोजायते सा च सत्त्वपुरुषान्यतासाक्षात्कारः अस्मन्मते तु देहादिभिन्नात्मसाक्षात्कारः सच सेदानीमविद्याप्रतिबन्धाद्देहात्मनोर्मनश्चक्षुराद्ययोग्यत्वाच्च भवति

चासौ योगजधर्म्मात् योगाङ्गानि तच्चोक्तानि यमनियमासन प्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि आसनं पद्मासनादि कुशासनादि च चैलाजिनकुशोत्तरमिति भगवद्वचनात् प्राणायाममाह योगसूत्रं तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः तस्मिन् आसनस्थैर्य्ये प्राणवायोरेव निर्गमप्रवेशरूपक्रियाविशेषात् श्वासप्रश्वासव्यपदेशः वहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानं प्रत्याहारः धारणामाह योगसूत्रं देशबन्धश्चित्तस्य धारणा देशेनाभिषक्तादौ चित्तस्य बन्धोविषयान्तरवैमुख्येनावस्थानं ध्यानमाह तत्प्रत्ययैकतानताध्यानं धारणैव धारावाहिनी ध्यानमित्यर्थः समाधिमाह तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः अर्थस्य धर्म्मोध्यानस्वरूपञ्च यदि ध्याने न भासते तदा समाधिरित्यर्थः सूत्रान्तरं त्रयमन्तरङ्गं पूर्व्वेभ्यः चरमत्रयं साक्षादुपकारकमित्यर्थः ॥ १११ ॥

नन्वेवं किमान्वीक्षिक्येत्यत आह ।

**ज्ञानग्रहणाभ्यासस्तद्विद्यैः सह सम्वादः ॥ ११२ ॥**

तदर्थमित्यनुवर्त्तते ज्ञायतेऽनेनेति ज्ञानं शास्त्रं प्रकृतं तस्य ग्रहणमध्ययनधारणे तत्राभ्यासोदृढतरसंस्कारः तद्विद्यैस्सह शियुक्तैः सम्वादः स्वानुभवदार्ढ्याय नहि योगाङ्गज्ञानाय तच्चापेक्षत्वेन न प्रकृतशास्त्रवैफल्यं श्रेयस्वरूपवैलक्षण्यात् ॥ ११२ ॥

४ अध्यायः

सम्वादप्रकारं दर्शयितुमाह ।

तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात् ॥ ११३ ॥

तं तद्विद्यं सब्रह्मचारी सहाध्यायी विशिष्टः प्रकृष्टज्ञानवान् श्रेयोऽर्थी मुमुक्षुः विशिष्टः पूर्व्वोक्तभिन्न इत्यर्थ इति कश्चित् विजिगीषुव्यावृत्त्यर्थं अनसूयुभिरिति ॥ ११३ ॥

सम्वादप्रकारमाह ।

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ११४ ॥

वाशब्दोनिश्चयार्थः अर्थित्वे तत्त्वबुभुत्सायां सत्यां प्रयोजनार्थं तत्त्वनिर्णयार्थं प्रतिपक्षहीनं प्रतिकूलपक्षहीनं यथा स्यात्तथाऽभ्युपेयात् तथाच भाष्यं स्वपक्षमनवस्थाप्य स्वदर्शनं परिशोधयेदिति तत्त्वनिर्णीषु तया न पक्षपात इति भावः॥११४॥

समाप्तं तत्त्वज्ञानविवृद्धिप्रकरणं ॥ ५७ ॥

तद्विद्यैः सह सम्वाद इत्युक्त न्यायवाह्यैः सह सम्वादः कर्त्तव्य इति भ्रमोमाभूदिति तत्त्वज्ञानपरिपालनप्रकरणमारभते ।

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डेवीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ११५ ॥

तत्त्वाध्यवसायस्य तत्त्वनिर्णयस्य संरक्षणं परोक्तदूषणास्क

न्दनेनाप्रामाण्यशङ्काविघटनं तदर्थं जल्पवितण्डे पूर्व्वमुक्ते इति ४ अध्यायःशेषः ॥ ११५ ॥

ननु ताभ्यां किङ्कार्य्यमित्यतआह ।

ताभ्यां विगृह्य कथनं ॥ ११६ ॥

अयमर्थः त्रयोवाह्यैः तद्दर्शनाभ्यासाहितकुज्ञानैरपरैर्व्वा यदि स्वपक्षआक्षिप्यते तदा ताभ्यां जल्पवितण्डाभ्यां सावधारणं चेतत् त्रय्यन्तःपातिनामाक्षेपे तु वादजल्पवितण्डाभिर्यथेच्छङ्कथयेदिति भावः वस्तुतस्तु मुमुक्षोर्न तादृशैः सह सम्वादोवीतरागत्वान्नहि शास्त्रपरिपालनमपि तदुद्देश्यं नवा तदुपेक्षयैव शास्त्रं गच्छति किन्तु शास्त्रमभ्यस्येतेति तत्त्वमिति ॥ ११६ ॥

समाप्तं तत्त्वज्ञानपरिपालनप्रकरणं ॥ ५८ ॥

समाप्तं चतुर्थाध्यायस्य द्वितीयमाह्निकं ॥ २ ॥

इति महामहोपाध्यायश्रीमद्विद्यानिवासभट्टाचार्य्यात्मजश्रीविश्वनाथसिद्धान्तपञ्चाननभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥

—

५ अध्यायः नत्वा शङ्करचरणं शरणं दीनस्य दुर्गमे तरणं। सम्प्रति निरूपयामः पञ्चममध्यायमतिगहनं ॥

अथ जातिनिग्रहस्थानयोरुद्दिष्टयोर्लक्षितयोर्बहुत्वं तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमित्यनेन सूचितं बलवज्जिज्ञासानुसारिप्रमाणादिपरीक्षयाऽन्तरितं सम्प्रत्यवसरतः प्रपञ्चनीयं तत्र जातिपरीक्षासहितजातिनिग्रहस्थानविशेषलक्षणमध्यायार्थः जातिपरीक्षासहितजातिविशेषलक्षणं प्रथमाह्निकार्थः सप्तदश चात्र प्रकरणानि तत्रादौ सत्प्रतिपक्षदेशनाभासप्रकरणं अन्यानि च यथास्थानं वक्ष्यन्ते तत्र च विशेषलक्षणार्थं जातिं विभजते।

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः ॥ १ ॥

अत्र च साधर्म्यादीनां कार्य्यान्तानां द्वन्द्वे तैः समा इत्यर्थात् साधर्म्यसमादयश्चतुर्विंशतिजातय इत्यर्थः अत्र च जातेर्विशेष्यत्वात् समाशब्दं मन्यन्ते भाष्यवार्त्तिकादौ समशब्दः अग्रिमसूत्रेषु तु समशब्दो निर्विवाद एव तत्र जातिशब्दस्य स्त्रीलिङ्गतया यद्यपि नान्वयस्तथापि प्रतिषेधो विशेष्य इति भाष्यादयः वयन्तु तद्विकल्पादिति सूत्रस्थविकल्पस्यैव विशेष्यत्वं विविधः

कल्पः प्रकारोविकल्पः तथाचैते साधर्म्यसमादयोजातिविकल्पा एवमग्रिमसूत्रेष्वपि इत्यञ्च जातेर्विशेषत्वे साधर्म्यसमेत्यपीति ब्रूमः समीकरणार्थं प्रयोगः समइति वार्त्तिकं यद्यपि नैतावतासमीकरणं तथापि समीकरणोद्देश्यकत्वमस्त्येव अथवा साधर्म्यमेव समं यत्र स साधर्म्यसमः एकत्रव्याप्तेराधिक्येऽपि साधर्म्यं सममेवेति भावः ॥ १ ॥

साधर्म्यवैधर्म्यसमौ लक्षयति ।

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्य्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥

उपसंहारे साध्यस्योपसंहरणे वादिना कृते तद्धर्मस्य साध्यरूपधर्मस्य योविपर्य्ययोव्यतिरेकस्तस्य साधर्म्यवैधर्म्याभ्यां केवलाभ्यां व्याप्त्यनपेक्षाभ्यां यदुपपादनं ततोहेतोः साधर्म्यवैधर्म्यसमावुच्येते तदयमर्थः वादिना अन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं साधर्म्यसमा वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं वैधर्म्यसमा तत्र साधर्म्यसमा यथा शब्दोऽनित्यः कृतकत्वात् घटवत् व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवं यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वाऽनित्यःस्यान्नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यः स्यादिति विशेषोवा वक्तव्यः वैधर्म्यसमा यथा शब्दोऽनित्यः कृतकत्वाद्घटवत् आकाशवदेति स्थापनायां अनि

५ अध्यायः त्वघटवैधर्म्यादमूर्त्तत्वान्नित्यः स्यादिशेषोवा वक्तव्यइति अत्र साधर्म्यत्वमात्रं वैधर्म्यत्वमात्रं वा गमकतौपयिकमित्यभिमानात् सत्प्रतिपक्षदेशनाभासे चेमे अनैकान्तिकदेशनाभासेति वार्त्तिके त्वनैकान्तिकपदं योगात्सत्प्रतिपक्षपरं एकान्ततः साध्य साधकत्वाभावात् ॥ २ ॥

अनयोरसदुत्तरत्वे वीजमाह ।

गोत्वात् गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

गोत्वात् गोसिद्धिर्गोव्यवहारइति सम्प्रदायः वयन्तु गोत्वाद्दवेतरासमवेतत्वे सति गोसमवेतात्सास्नादितः एतेन व्याप्तिपक्षधर्म्मत्वे दर्शिते गोर्गोत्वस्य तादात्म्येन गोरेव वा सिद्धिर्यथा तथैव कृतकत्वादपि व्याप्तिपक्षधर्म्मतासहितादनित्यत्वसिद्धिर्नतु व्याप्तिपक्षधर्म्मतारहितात् साधर्म्यमात्रात् तथासति अदूषकसाधर्म्यात्प्रमेयत्वादितस्तद्वचनमप्यदूषकं स्यादित्ययं विशेषः ॥ ३ ॥

इति सत्प्रतिपक्षदेशनाभासप्रकरणं ॥ ५८ ॥

क्रमप्राप्तं जातिषट्कं निरूपयति ।

साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥

उत्कर्षेण समउत्कर्षसमएवमपकर्षसमोऽपि वर्ण्यावर्ण्य

साध्येति भावप्रधानोनिर्द्देशः वर्ण्यत्वादिना समोवर्ण्यसमादिः ५ अध्यायः
अविद्यमानधर्मारोपउत्कर्षः विद्यमानधर्मापचयोऽपकर्षः
वर्ण्यत्वं वर्णनीयत्वं तच्च सन्दिग्धसाध्यकत्वादि तदभावोऽवर्ण्यत्वं
विकल्पोद्वैविध्यं साध्यत्वं पञ्चावयवसाधनीयत्वं साध्यदृष्टान्तयो
र्धर्मविकल्पादिति पञ्चानामुत्थानबीजं उभयसाध्यत्वादिति
षष्ठस्य तदयमर्थः साध्यतेऽनेति साध्यं पक्षः तथाच साध्यदृष्टा
न्तयोरित्यस्य पक्षदृष्टान्तयोरन्यतरस्मिन्नित्यर्थः धर्मविकल्पो
धर्मस्य वैचित्र्यंतच्च क्वचित्सत्त्वं क्वचिदसत्त्वं प्रकृते साध्यसाधनान्य
तररूपस्य धर्मस्य विकल्पात्सत्त्वाद्योऽविद्यमानधर्मारोपः स
उत्कर्षसमः व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्य
साधनान्यतरेणाविद्यमानधर्मप्रसञ्जनं उत्कर्षसमइति फलि
तार्थः यथाशब्दोऽनित्यः कृतकत्वादिति स्थापनायां अनित्यत्वं
कृतकत्वं घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात्
तथाच विवक्षितविपरीतसाधनाद्विशेषविरुद्धोहेतुस्तद्देशनाभा
साचेयंएवं श्रावणशब्दसाधर्म्यात्कृतकत्वाद्घटोऽपि श्रावणःस्याद
विशेषात् वस्तुतस्तु घटे श्रावणत्वापादनेऽर्थान्तरमतउक्तंलक्षणे
दृष्टान्तपदं साध्यपदञ्च न देयं अपकर्षसमायान्तु धर्मविकल्पः
धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वं ततः अपकर्षः साध्य
साधनान्यतरस्याभावप्रसञ्जनं तथाच पक्षदृष्टान्तान्यतरस्मिन्
व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभाव

५ अध्यायः प्रसञ्जनमपकर्षसमा यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् आद्येऽसिद्धिदेशना द्वितीये बाधदेशना एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वञ्च व्यावर्त्तेतेति दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासोऽपीयं यत्तु वार्त्तिके शब्दो नीरूप इति घटोऽपि नीरूपः स्यादित्यपकर्ष इति तदसत् घटे नीरूपत्वापादनस्यार्थान्तरत्वात् आचार्य्यस्वरसोऽप्येवं यत्तु वैधर्म्यसमायामेवान्तर्भावः स्यादिति तन्न उपधेयसङ्करेऽप्युपाधेरसङ्करात् वर्ण्यसमायान्तु साध्यःसिद्ध्यभाववान्सन्दिग्धसाध्यकादिर्वा तस्य धर्मः सन्दिग्धसाध्यकादिवृत्तिहेतुस्तस्य विकल्पात्सत्त्वात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्यापादनं वर्ण्यसमा तदयमर्थः पक्षवृत्तिहेतुर्हि गमकः पक्षश्च सन्दिग्धसाध्यकस्तथाच सन्दिग्धसाध्यकवृत्तिर्हेतुस्त्वया दृष्टान्तेऽपि स्वीकार्य्यः तथाच दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात्पक्षवृत्तित्वानिश्चयादसाधारणो हेतुस्तद्देशनाभासा चेयं हेतुः सन्दिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते तदागमकहेत्वभावात्साधनविकलो दृष्टान्तः स्यादिति भावः अवर्ण्यसमायान्तु दृष्टान्ते सिद्धसाध्यके यो धर्मो हेतुस्तस्य सत्त्वात् पक्षे

शब्दादावसन्दिग्धसाध्यकत्वापादनमवर्ण्यसमा दृष्टान्ते हेतोर्या ५ अथवा दृष्टत्वं तादृशोहेतुरेव गमकइत्यभिमानेन एवमापादनं दृष्टान्ते योहेतुः सिद्धसाध्यकवृत्तिः सचेन्न पक्षे तदा गमकत्वाभावात् स्वरूपासिद्धिः स्यादतस्तादृशोहेतुरवश्यं पक्षत्वाभिमते स्वीकार्य्यः तथाच सन्दिग्धसाध्यकत्वलक्षणपक्षत्वाभावादाश्रयासिद्धिः असिद्धिदेशनाभासा चेयं विकल्पसमायान्तु पक्षे दृष्टान्ते च योधर्म्मस्तस्य विकल्पोविरुद्धः कल्पोव्यभिचारित्वं उपलक्षणं चैतत् अन्यवृत्तिधर्म्मस्यापि बोध्यं व्यभिचारोऽपि हेतोर्धर्म्मान्तरं प्रति धर्म्मान्तरस्य साध्यं प्रति धर्म्मान्तरस्य धर्म्मान्तरं प्रति वा तथाच कस्यचिद्धर्म्मस्य कचिद्व्यभिचारदर्शनेन धर्म्मत्वाविशेषात् प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनं विकल्पसमा यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद्गुरुत्वस्यानित्यत्वव्यभिचारदर्शनादनित्यत्वस्य मूर्त्तत्वव्यभिचारदर्शनाद्धर्म्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेदित्यनैकान्तिकदेशनाभासा चेयं पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनं साध्यसमा तत्राय माशयः एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वं तथा च पक्षादेरनुमितिविषयत्वात् साध्यवदेतत्प्रयोगसाध्यत्वं अतः साध्यसमा तथाहि पक्षादेः पूर्व्वं सिद्धत्वे एतत् प्रयोगसाध्यत्वाभावात्नानुमितिविषयत्वं पूर्व्वमसिद्धत्वे पक्षादेरज्ञानादाश्रया

५ अध्यायः सिद्ध्यादयस्तद्दृष्टान्ताभासा इत्थं सूत्रार्थस्तु उभयसाध्यत्वात् उभयं पक्षदृष्टान्तौ तद्धर्मो हेत्वादिः तत्साध्यत्वं तदधीनानुमिति विषयत्वं साध्यस्येव पक्षादेरपोति तुल्यतापादनमिति लिङ्गोप हितभानमते लिङ्गस्याप्यनुमितिविषयत्वात् साध्यसमत्वं हेतोस्व साध्यत्वे हेतुमान्दृष्टान्तोऽपि साध्यस्त्वाशयः ॥ ४ ॥

एतासामसदुत्तरत्वे बीजमाह।

किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥

किञ्चित्साधर्म्यात् साधर्म्यविशेषात् व्याप्तिसहितात् उपसंहार सिद्धेः साध्यसिद्धेः वैधर्म्यादतद्विपरीतात् व्याप्तिनिरपेक्षात्सा धर्म्यमात्रात् भवता कृतः प्रतिषेधोन सम्भवतीत्यर्थः अन्यथा प्रमेयत्वरूपासाधकसाधर्म्यात् तद्दूषणमप्यसम्यक् स्यादिति भावः तथा चायं क्रमः अनित्यत्वव्याप्यात् कृतकत्वात् शब्देऽनित्य त्वमुपसंहरामो नतु कृतकत्वं रूपस्यापि व्याप्यं येन ततो रूपमप्या पादनीयं शब्दे एवं अनित्यत्वं न रूपव्याप्यं येन रूपाभावाद नित्यत्वाभावः शब्दे स्यात् एवं वर्ण्यसमेऽपि किञ्चित्साधर्म्यात् व्याप्यतावच्छेदकावच्छिन्नाद्धेतोः साध्यसिद्धिः तादृशहेतुमत्त्व स्य दृष्टान्तताप्रयोजकं नतु पक्षे यावद्विशेषणावच्छिन्नहेतुमत्त्वा बदवच्छिन्नहेतुमत्त्वं अन्यथा त्वयाऽपि दूषणेयो दृष्टान्तीकर्त्तव्यः

सोऽपि न स्यात् एवमवर्ण्यसमेऽपि व्याप्यतावच्छेदकाव ५ अध्यायः
च्छिन्नस्य दृष्टान्तदृष्टस्य पक्षे सत्त्वात्साध्यसिद्धिर्न तु दृष्टान्त
वृत्तियावद्धर्मावच्छिन्नस्य पक्षे सत्त्वं एवं विकल्पसमेऽपि प्रकृत
साध्यव्याप्यात् प्रकृतहेतोः साध्यसिद्धिस्तद्वैधर्म्यात् यत्किञ्चिद्व्य
भिचारात् कुतः प्रतिषेधोन सम्भवति नहि यत्किञ्चिद्व्यभि
चारादेव प्रकृतहेतोः प्रकृतसाध्यासाधकत्वमतिप्रसङ्गात् एवं
साध्यसमेऽपि व्याप्याद्धेतोः सिद्धे पक्षे साध्यसिद्धिर्न तु पक्षदृष्टा
न्तादयोऽप्यनेन साध्यन्ते तथासति क्वचिदपि साध्यसिद्धिर्न
स्यात् त्वदीयदूषणमपि विलीयेत ॥ ५ ॥

वर्ण्यावर्ण्यसाध्यसमास्तु समाध्यन्तरमप्याह ।

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

दृष्टान्तोपपत्तिर्दृष्टान्ततोपपत्तिः साध्यातिदेशात् दृष्टा
न्ते हि साध्यमतिदिश्यते तावतैव दृष्टान्तत्वमुपपद्यते न त्वशेषो
धर्मः पक्षदृष्टान्तयोरभेदापत्तेः पक्षादेरपि साध्यसमत्वमेतेन
प्रत्युक्तं दृष्टोऽन्तो दृष्टान्तः पक्षः तस्मात्क्रियावानित्यतः पक्षोत्की
र्त्तनात्तथा च साध्यस्यातिदेशात् साधनात् पक्षस्त्यज्यते न तु
पक्षोऽपि साध्यतेऽतिप्रसङ्गादिति भावः ॥ ६ ॥

समाप्तं जातिषट्कप्रकरणं ॥ ६० ॥

क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति।

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वाद् प्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

हेतोरिति साधकत्वमिति शेषः प्राप्तिपक्षे दोषमाह प्राप्त्याऽविशिष्टत्वादिति द्वयोरपि प्राप्तत्वाविशेषात् किं कस्य साधकं अप्राप्तिपक्षे दोषमाह अप्राप्त्येति अप्राप्तस्य साधकत्वेऽतिप्रसङ्गात् साधकत्वञ्चात्र कारकज्ञापकसाधारणं एवञ्च कारकज्ञापकलक्षणं साधनं कार्य्यञ्चाप्यनयोर्न साध्येन सम्बद्धं सत्साधकं चेत्तदा सत्त्वाविशेषान्न कार्य्यकारणभावः तत्सम्बन्धस्य प्रागेव ज्ञातत्वान्न ज्ञाप्यज्ञापकभावः प्राप्तयोर्न जन्यजनकभावः प्राप्तत्वेन लवणोदकयोरिवाभेदादित्याशयः इत्यन्ये तथाच प्राप्त्याऽविशेषादनिष्टापादनेन प्रत्यवस्थानं प्राप्तिसमा यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति साध्याभावबुद्धिमेव किन्तन्न जनयेत् अप्राप्तत्वाविशेषात् तथाचाप्राप्त्या साधकत्वादनिष्टापादनमप्राप्तिसमा प्रतिकूलतर्कदेशनाभासे चैते ॥ ७ ॥

अनयोरसदुत्तरत्वे वीजमाह।

घटादिनिष्पत्तिदर्शनात्पीडने चाभिचाराद् प्रतिषेधः ॥ ८ ॥

दण्डादितो घटादिनिष्पत्तेर्दर्शनात् सर्व्वलोकप्रत्यक्षसिद्ध

त्वादभिचारात् श्येनादितः अनुपीडने च व्यभिचारान्नदुक्तः प्रतिषेधः सम्भवति नहि कारणं दण्डादि प्रागेव घटादिना सम्बद्धमपि तु मृदादिना श्येनादिरप्युद्देश्यतया पीडां जनयति अन्यथा लोकवेदसिद्धकार्य्यकारणभावोच्छेदे तदुक्तो हेतुरप्य साधकः स्यादिति ॥ ८ ॥ ५ अध्यायः

प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणं ॥ ६१ ॥

क्रमप्राप्तौ प्रसङ्गप्रतिदृष्टान्तसमौ जाती लक्षयति ।

दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥

दृष्टान्तस्य कारणं प्रमाणं तदनपदेशोऽनभिधानं अभिधानं चानतिप्रयोजनकं तथाच दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावात् प्रत्यवस्थानमर्थः. यद्यपीदं सदुत्तरमेव तथापि दृष्टान्ते प्रमाणं वाच्यं तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्य्यं तदुक्तमाचार्य्यैरनवस्थाभासप्रसङ्गः प्रसङ्गसम इति एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव पूर्व्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेऽन्तर्भूतमिति विशेषः अनवस्थादेशनाभासा चेयं प्रतिदृष्टान्तसमः प्रत्येतव्यः प्रतिदृष्टान्तेन प्रत्यवस्थानात् प्रतिदृष्टान्तसमः एतच्च सावधारणं तेन प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानमर्थः तेन साधर्म्यसमा

५ अध्यायः व्युदासः यदि घटदृष्टान्तबलेनानित्यः शब्दः तदाकाशदृष्टान्तबलेन नित्य एव स्यात् नित्यः किं न स्यादिति बाधः प्रतिरोधापादनीयः हेत्वनङ्गं दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः बाधप्रतिरोधान्यतरदेशनाभासा चेयं ॥ ९ ॥

प्रसङ्गसमे प्रत्युत्तरमाह ।

**प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः॥१०॥**

दृष्टान्तोऽपि निदर्शनत्वात्त्वेन साध्यनिश्चयार्थमपेक्ष्यते न तु दृष्टान्तादृष्टान्ताद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा अन्यथा घटादिप्रत्यक्षाय प्रदीपइव प्रदीपप्रत्यक्षायापि अनवस्थितप्रदीपपरम्परा प्रसज्येत त्वदीयसाधनमपि व्याहन्येत ॥१०॥

प्रतिदृष्टान्तसमे प्रत्युत्तरमाह ।

**प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥**

अत्रायमुत्तरक्रमः प्रतिदृष्टान्तस्त्वया किमर्थमुपादीयते मदीयहेतोर्बाधार्थं सत्प्रतिपक्षितत्वार्थं वा नाद्यः यतः प्रतिदृष्टान्तस्य हेतुत्वं स्वार्थसाधकत्वे मदीयोदृष्टान्तोनाहेतुः नासाधकस्तथा च तुल्यबलत्वान्न बाधः न वा द्वितीयोऽपि यतः प्रतिदृष्टान्तस्य स्वार्थसाधकत्वे उच्यमाने नाहेतुर्दृष्टान्तः मदीयोदृष्टान्तस्तु सहेतुकत्वादधिकबलः वस्तुतो हेतुं विना दृष्टान्तमात्रेण

न सत्प्रतिपक्षसम्भावना तदभावव्याप्यवत्ताज्ञानाभावात् हेतु ५ अध्याय-पादाने तु मदुत्तरत्वमेवेति भावः इति ॥ ११ ॥

इति प्रसङ्गसमप्रतिदृष्टान्तसमप्रकरणं ॥ ६२ ॥

क्रमप्राप्तमनुत्पत्तिसमं लक्षयति ।

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥

प्रागुत्पत्तेरिति साधनाङ्गस्येति शेषः. कारणाभावात् हेतुभावात् तथाच साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक् हेत्वभावदत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः यथा घटो रूपवान् गन्धात् पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः एवं आद्यक्षणे रूपाभावाद्बाधस्य अनुत्पत्त्या प्रत्यवस्थानस्य तत्रापि सत्वात उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात् जातित्वे सतीति च विशेषणीयं तेनोत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यत्र बाधेन प्रत्यवस्थानं नातिव्याप्तिः असिद्ध्यादिदेशनाभासा चेयं ॥ १२ ॥

अथोत्तरमाह ।

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥

उत्पन्नस्य तथाभावात् घटाद्यात्मकत्वात् तत्र कारणस्य हेतो

५ अध्यायः हूपपत्तेः सत्त्वात् कथं कारणप्रतिषेधः अयमाशयः पक्षे हेत्व भावाऽसिद्धिः नत्वनुत्पन्ने हेत्वभावः सम्भवति अधिकरणाभावात् नहि हेत्वभावमात्राऽसिद्धिः त्वदीयहेतोरपि क्वचिदभावसत्त्वा दृतेन दृष्टान्तासिद्धिर्व्याख्याता यदा कदाचिद्धेतुसत्त्वेनैव दृष्टा न्तोपपत्तेः एवं हेत्वादीनां यदा कदाचित्पक्षे सत्त्वादेव हेत्वादिभावोनतु सार्व्वकालिकी तदपेक्षेति ॥ १३ ॥

इत्यनुत्पत्तिसमप्रकरणं ॥ ६३ ॥

क्रमप्राप्तं संशयसमं लक्षयति ।

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानि त्यसाधर्म्यात् संशयसमः ॥ १४ ॥

नित्यानित्यसाधर्म्यादिति संशयकारणोपलक्षणं तेन समा नधर्म्मदर्शनादिरर्थः संशयकारणवत्वात् संशयेन प्रत्यव स्थानं संशयसमः अधिकन्तूदाहरणपरं तथाहि शब्दोऽनित्यः कार्य्यत्वाद्घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे चैन्द्रि यकत्वं तुल्यं यथा कार्य्यत्वान्निर्णायकादनित्यत्वं निर्णीयते तथा ऐन्द्रियकत्वात्संशयकारणादनित्यत्वं सन्दिह्यतां एवं शब्दत्वा द्यसाधारणधर्म्मदर्शनादपि संशयोबोध्यः तथाच हेतुज्ञानेऽ प्रामाण्याज्ञानाधानद्वारा साध्यसंशयात् सत्प्रतिपक्षदेशना भासेयं ॥ १४ ॥

अत्रोत्तरं ।

साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥

साधर्म्यात्साधर्म्यदर्शनात्संशय आपाद्यमानेऽपि न संशयो वैधर्म्याद्वैधर्म्यदर्शनात् यदि च कार्य्यत्वरूपविशेषदर्शनेऽपि संशयस्तदाऽत्यन्तसंशयप्रसङ्गः संशयानुच्छेदप्रसङ्गः नच तथाऽभ्युपगन्तुं शक्यमित्याह नित्यत्वेति सामान्यस्य समानधर्म्मदर्शनस्य नित्यत्वानभ्युपगमात् नित्यसंशयजनकत्वानभ्युपगमात्तथा सति त्वदीयो हेतुरपि न परपक्षप्रतिषेधकः स्यादिति भावः सामान्यस्य गोत्वादेर्नित्यत्वानभ्युपगमात् नित्यत्वानभ्युपगमप्रसङ्गात् तत्रापि साधारणधर्म्मप्रमेयत्वादिना संशय एव स्यादिति केचित् ॥ १५ ॥

इति संशयसमप्रकरणं ॥ ६४ ॥

क्रमप्राप्तं प्रकरणसमं लक्षयति ।

उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥

उभयसाधर्म्यात् अन्वयसहचाराद्व्यतिरेकसहचाराद्वा प्रक्रियाप्रकर्षेण क्रिया साधनं विपरीतसाधनमिति फलितार्थः

५ अध्यायः तत्सिद्धेस्तस्य पूर्व्वमेव सिद्धेः तथा चाधिकबललेनारोपितप्रमाणान्तरेणबाधेन प्रत्यवस्थानं प्रकरणसमः यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात् बाधदेशनाभासा चेयं ॥ १६ ॥

अत्रोत्तरमाह ।

प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥

प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधः त्वया क्रियते तस्यानुपपत्तिः कुतः प्रतिपक्षोपपत्तेः त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात् अयमाशयः श्रावणत्वेन पूर्व्वं नित्यत्वस्य साधनाद्योबाधउच्यते स नोपपद्यते पूर्व्वं साधितस्य बलवत्त्वाभावात् कदाचित्कृतकत्वेनानित्यत्वस्यापि पूर्व्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात् ॥ १७ ॥

इति प्रकरणसमप्रकरणं ॥ ६५ ॥



क्रमप्राप्तमहेतुसमं लक्षयति ।

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

त्रैकाल्यं कार्य्यकालतत्पूर्व्वापरकालाः तेन हेतोरसिद्धेः

हेतुत्वासिद्धेः अयमर्थः दण्डादिकं घटादेर्न पूर्व्ववर्त्तितया ५ अध्याय.
कारणं तदानीं घटादेरभावात् कस्य कारणं स्यात् अतएव
न घटाद्युत्तरकालवर्त्तितयाऽपि नवा समानकालवर्त्तितया
तुल्यकालवर्त्तिनोः सव्येतरविषाणयोरिवाविनिगमनापत्तेः
तथाच कालसम्बन्धखण्डनेनाहेतुतया प्रत्यवस्थानमहेतुसमः
कारणमात्रखण्डनेन स्वीयहेतोरपि खण्डनान्न तदसंग्रहः
प्रतिकूलतर्कदेशनाभासा चेयं ॥ १८ ॥

अत्रोत्तरमाह ।

न हेतुतः साध्यसिद्धेः त्रैकाल्यासिद्धिः ॥ १९ ॥

त्रैकाल्यासिद्धिस्त्रैकाल्येन याऽसिद्धिरुक्ता सा न कुतः
हेतुतः साध्यसिद्धेः त्वयाऽप्यभ्युपगमात् ॥ १९ ॥

पूर्व्ववर्त्तितामात्रेणैव हेतुतासम्भवात् अन्यथा त्वदीयहेतो
रपि साध्यं न सिध्येदित्याह ।

प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥

हेतुफलभावखण्डने प्रतिषेधस्याप्यनुपपत्तेः प्रतिषेद्धव्यस्य
परकीयहेतोर्न प्रतिषेधइत्यर्थः ॥ २० ॥

इति अहेतुसमप्रकरणं ॥ ६६ ॥

क्रमप्राप्तमर्थापत्तिसमं लक्षयति ।

**अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥**

अर्थापत्तिरर्थापत्त्याभासः तथाचार्थापत्त्याभासेन प्रतिपक्ष साधनाय प्रत्यवस्थानमर्थापत्तिसमः अयमाशयः अर्थापत्तिर्हि उक्तेनानुक्तमाक्षिपति यथा शब्दोऽनित्य इत्युक्तेऽर्थादापद्यतेऽन्यत् नित्यं तथाच दृष्टान्तासिद्धिः विरोधश्च कृतकत्वादनित्य इत्युक्तेऽर्थादापन्नं अन्यस्माद्धेतोर्बाधः सत्प्रतिपक्षोवा अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः विशेषविधेः शेष निषेधफलकत्वनित्यभिमानः सर्व्वदोषदेशनाभासा चेयं ॥ २१ ॥

अत्रोत्तरं ।

**अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥**

किमुक्तेन अनुक्तं यत्किञ्चिदेवार्थादापद्यते उक्तोपपादकं वा आद्ये त्वत्पक्षहानिरप्यापाद्यतां त्वयानुक्तत्वात् अन्त्ये अस्या अर्थापत्तेरनैकान्तिकत्वं एकान्तिकत्वं एकपक्षसाधकत्वं तत्तु नास्ति नहि अनित्य इत्यस्योपपादकं नित्यत्वमिति नहि विशेषविधिमात्रं शेषनिषेधफलकमपि तु सति तात्पर्य्ये क्वचित् नहि नीलोघट इत्युक्ते सर्व्वमन्यदनीलमिति कश्चित्प्रतिपद्यते ॥ २२ ॥

इति अर्थापत्तिसमप्रकरणं ॥ ६७ ॥

अविशेषसमं लक्षयति।

एकधर्म्मोपपत्तेरविशेषे सर्व्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥

एकस्य धर्म्मस्य कृतकत्वादेः शब्दे घटे चोपपत्तेः सत्त्वात् यदि शब्दघटयोरनित्यत्वेनाविशेष उच्यते तदा सर्व्वेषामविशेषप्रसङ्गः कुतः सद्भावोपपत्तेः सतः सत्ताजातेस्ये भावाधर्म्माः सत्त्वप्रमेयत्वादयस्तेषामुपपत्तेः सत्त्वात् तथाच सर्व्वेषामभेदे पक्षाद्यविभागः सर्व्वेषामेकजातीयत्वेऽवान्तरजात्युच्छेदः सर्व्वेषामनित्यत्वे जात्यादिविलयइत्यादि तथाच सत्ता सद्वृत्तिधर्म्मेणाविशेषापादनमविशेषसमेति फलितं कथं चाविशेषसमइति लक्ष्यनिर्देशः सद्भावोपपत्तेः सर्व्वाविशेषप्रसङ्गादिति लक्षणं शेषं व्युत्पादकं प्रतिकूलतर्कदेशना भासा चेयं ॥ २३ ॥

अत्रोत्तरमाह।

क्वचित्तद्धर्म्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ॥ २४ ॥

तद्धर्म्मस्तस्य हेतोर्धर्म्मो व्याप्त्यादिस्तस्य क्वचित् कृतकत्वादौ उपपत्तेः सत्त्वात् क्वचित्सत्त्वादौ अनुपपत्तेः अभावात् त्वदुक्तस्य प्रतिषेधस्याभावोऽसम्भवइत्यर्थः ॥ २४ ॥

इति अविशेषसमप्रकरणं ॥ ६८ ॥

उपपत्तिसमं लक्षयति।

उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

उभयं पक्षप्रतिपक्षौ तयोः कारणस्य प्रमाणस्य उपपत्तेः सत्त्वात् तथाच व्याप्तिमपुरस्कृत्य यत्किञ्चिद्धर्मेण परपक्ष दृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानं उपपत्तिसमः यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा त्वत्पक्षेऽनित्यत्वे प्रमाण मस्ति तथा मत्पक्षोऽपि सप्रमाणकः त्वत्पक्षमत्पक्षान्यतरत्वात् त्वत्पक्षवत् तथाच बाधः प्रतिरोधोवा तद्देशनाभासा चेयं ॥ २५ ॥

अत्रोत्तरमाह।

उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥

अयं त्वदुक्तप्रतिषेधोन सम्भवति कुतः मत्पक्षे उपपत्ति कारणस्य मत्पक्षसाधकप्रमाणस्य त्वयाऽभ्यनुज्ञानात् त्वया हि मत्पक्षस्य दृष्टान्तीकरणेन सप्रमाणकत्वमनुज्ञातमतः कथं तत्प्रतिषेधः शक्यते कर्त्तुं अनुज्ञातस्यापि प्रतिषेधे स्वपक्ष एव किं न प्रतिषिध्यते ॥ २६ ॥

इति उपपत्तिसमप्रकरणं ॥ ६८ ॥

उपलब्धिसमं लक्षयति । 

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥२७॥

वादिना निर्दिष्टस्य कारणस्य साधनस्याभावेऽपि साध्यस्योपलम्भात् प्रत्यवस्थानमुपलब्धिसम इत्यर्थः तथाहि पर्व्वतो वह्निमान् धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते नच तत्सम्भवति धूमं विना आलोकादितोऽपि वह्निसिद्धेः तथाच न तस्य साधकत्वमिति प्रतिकूलतर्कः नवा धूमाद्वह्निमानेवेत्यवधारणं द्रव्यत्वादेरपि धूमेन साधनात् नवा पर्व्वत एव वह्निमानेवेत्यादिकं अवधारयितुं शक्यते महानसादेरपि वह्निमत्त्वादन्यथा दृष्टान्तासिद्धिः स्यात् एवं वह्निशून्यपर्व्वतस्यापि सत्त्वाद्बाध इत्यादि तद्देशनाभासा चेयं ॥ २७ ॥

अत्रोत्तरमाह ।

कारणान्तरादपि तद्धर्म्मोपपत्तेरप्रतिषेधः ॥ २८ ॥

कारणान्तरात्साधनान्तरादालोकादितोऽपि तस्य धर्म्मस्य साध्यस्योपलब्धेस्त्वदुक्तः प्रतिषेधो न सम्भवति अयमाशयः नहि वयमवधारणार्थं वह्निमान् धूमादित्यादिकं प्रयुञ्ज्महे अपि तु सन्दिग्धस्य वह्नेः सिद्ध्यर्थं अन्यथा त्वदुक्तमसाधकतासाधनमपि न स्यादसाधकतासाधकान्तरस्यापि सत्त्वात् ॥ २८ ॥

इति उपलब्धिसमप्रकरणं ॥ ७० ॥

अनुपलब्धिसमं लक्षयति।

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥

यद्यपि चेयं द्वितीयाध्याये दर्शिता दूषिता च तथाप्यनुपलब्धिसमजातिरेवमिति तत्रानुक्तेरत्र क्रमप्राप्ताऽभिधीयते तत्रायं क्रमः नैयायिकेनावच्छब्दानित्यत्वमेव साध्यते यदि शब्दो नित्यः स्यादुच्चारणात् प्राक् कुतो नोपलभ्यते नहि घटाद्यावरणकुड्यादिवच्छब्दस्यावरणमस्ति तदनुपलब्धेरिति तत्रैवं जातिवादी प्रत्यवतिष्ठते यद्यावरणानुपलब्धेरावरणाभावः सिध्यति तदा आवरणानुपलब्धेरप्यनुपलम्भादावरणानुपलब्धेरप्यभावः सिध्येत् तथा चावरणानुपलब्धिप्रमाणकआवरणाभावेन स्यादतिलावरणोपपत्तिरेव स्यादिति शब्दनित्यत्वे नोक्तं बाधकं युक्तं नन्वनुपलब्धेरनुपलब्ध्यन्तरापेक्षणात् कथमेवमिति चेत् इत्थं अनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणे स्वयमेव स्वस्मिन्ननुपलब्धिरूपेति वाच्यं तथा च तथैवानुपलब्ध्यानुपलब्धत्वसम्भवात्तदभावसिद्धेः स्वात्मन्यनुपलब्धिरूपत्वाभावे ऽनुपलब्धित्वमेव न स्यात् अनुपलब्धेरनुपलब्ध्यन्तरापेक्षणेऽनवस्था स्यादेव इत्यप्येवंरूपेण प्रत्यवस्थानमनुपलब्धिसम इत्यर्थः अति[illegible]कं द्वैतनाभासा चेयं ॥ २९ ॥

अत्रोत्तरमाह।

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥**

अनुपलब्धिः आत्मन्यनुपलब्धिरिति कोऽर्थः स्वयमनुपलब्धिरूपेति चेद्भवत्येव स्वविषयिण्यनुपलब्धिरिति चेन्नेदं प्रसक्तं अनुपलब्धेरनुपलम्भात्मकत्वात् उपलम्भाभावात्मकत्वात् अभावस्य च निर्विषयकत्वात् स्वात्मन्यनुपलब्धित्वाभावेऽनुपलब्धित्वमेव कथमस्यादिति चेत् कतमोविरोधः नहि घटः स्वविषयो न भवतीति नायं घटः आवरणाभावः कथमनुपलब्धिविषय इति चेत् क एवमाह किन्त्वनुपलब्धिसहकृतेन्द्रियग्राह्यत्वादनुपलब्धिग्राह्य इत्युपचर्य्यते अतस्तदनुपलब्धेरनुपलम्भादित्यादिकमहेतुः अन्यथा त्वत्साधनमपि दोषानुपलब्धेरनुपलम्भात् सदोषमेव स्यादिति ॥ ३० ॥

नन्वनुपलब्धेः स्वस्मिन्ननुपलब्धित्वाभावेऽनुपलब्धिरपि केन सिध्येदत आह।

**ज्ञानविकल्पानाञ्च भावाभावसम्वेदनादध्यात्मं ॥ ३१ ॥**

अध्यात्मं आत्मन्यधि ज्ञानविकल्पानां ज्ञानविशेषाणां भावाभावयोर्मनसा सम्वेदनात् घटं साक्षात्करोमि वह्निमनु

 मिनोमि नानुमिनोमीत्येवं ज्ञानविशेषतदभावानां मनसैव सुग्रहत्वादिति भावः ॥ ३१ ॥

इत्यनुपलब्धिसमप्रकरणं ॥ ७१ ॥

अनित्यसमं लक्षयति ।

साधर्म्यात्तुल्यधर्म्मोपपत्तेः सर्व्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥

यदि दृष्टान्तघटसाधर्म्यात् कृतकत्वात्तेन सह तुल्यधर्म्मतोपपद्यतइत्यतः शब्देऽनित्यत्वं साध्यते तदा सर्व्वस्यैवानित्यत्वं स्यात् सत्त्वादिरूपसाधर्म्यसम्भवात् नचेदमर्थान्तरग्रस्तमिति वाच्यं सर्व्वस्यानित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्य्यात् परस्यान्वयव्यतिरेकिण एवानुमानत्वादित्याशयः तथाच व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण सर्व्वस्य साध्यवत्त्वापादनमनित्यसमा साध्यपदाद्विशेषसमातोव्यवच्छेदस्तत्र सर्व्वाविशेष एवापाद्यते नतु सर्व्वस्य साध्यवत्त्वं यत्तु अनित्यत्वेन समाऽनित्यसमेति भावप्रधानोनिर्द्देशस्तथाच अन्वर्थलभ्यमेव लक्षणमिति तन्न वह्निमान् धूमादित्यादौ महानससाधर्म्यात् सत्त्वात्सर्व्वस्य वह्निमत्त्वं स्यादित्यस्य जात्यन्तरत्वापत्तेः आचार्य्यास्तु साधर्म्यं वैधर्म्यस्याप्युपलक्षकं यथाकाशवैधर्म्यात् कृतकत्वाच्छब्दोऽनित्यस्तथाकाशवैधर्म्यादाकाशभिन्न

त्वादितः सर्व्वमेवानित्यं स्यादित्यस्य लक्षणे यत्किञ्चिदुक्ता ५ अध्यायः
त्येव वाच्यमित्याहुः अत्र च वैधर्म्यस्य विपक्षादृत्तित्वाच्च
सर्व्वस्य साध्यवत्त्वापादनं किन्त्वात्मादीनामप्यनित्यत्वं स्यादिति
तच्चार्थान्तरमित्यवधेयं प्रतिकूलतर्कदेशनाभासा चेयं॥३२॥

अत्रोत्तरमाह।

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाध
र्म्यात् ॥ ३३ ॥

यदि यत्किञ्चित्साधर्म्यात्सर्व्वस्य साध्यवत्त्वमापादयतस्तव
साधर्म्यस्यासाधकत्वमभिमतं तदा त्वत्कृतप्रतिषेधस्याप्यसिद्धिः
तस्यापि प्रतिषेध्यसाधर्म्येण प्रवृत्तत्वात् त्वया ह्येवं साध्यते
कृतकत्वं न साधकं दृष्टान्तसाधर्म्यरूपत्वात्सत्त्वादिवत् अत्र च
त्वदीयहेतुस्त्वत्प्रतिषेध्येन मदीयहेतुना कृतकत्वेन सत्त्वेन च
सह साधर्म्यरूपस्तथा चायमपि न साधकः स्यात् ॥ ३३ ॥

यदि च साधर्म्यमात्रं न साधकमपि तु व्याप्तिसहितमित्य
भिमतं तदा कृतकत्व तदस्ति नतु सत्त्वइति विशेषदृत्याह।

दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्म्मस्य
हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥

साध्यसाधनभावेन व्याप्यव्यापकभावेन दृष्टान्ते प्रज्ञातस्य

५-अध्यायः अमितत्त्व तस्य हेतुत्वात्साधकत्वात् तस्य हेतुत्वस्य उभयथा अन्वयेन व्यतिरेकेण च भावात् मदीयहेतौ सत्त्वात् सत्त्वा दिनाऽविशेषइति यदुक्तं तन्न भवति ॥ ३४ ॥

इत्यनित्यसमप्रकरणं ॥ ७२ ॥

नित्यसमं लक्षयति ।

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्य समः ॥ ३५ ॥

अनित्यस्वभावः अनित्यत्वं तस्य नित्यं सर्व्वकालं स्वीकारे अनित्ये शब्दे नित्यत्वं स्यादित्यापादनं नित्यसमा अयमाशयः अनित्यत्वस्य नित्यमस्वीकारेऽनित्यत्वाभावदशायां तस्यानि त्यत्वं न तस्यापि नित्यत्वापत्तिः नहि दण्डाभावदशायां दण्डी त्युच्यते अतोऽनित्यत्वं नित्यमेव स्वीकार इत्यभ्युपगन्तव्यं तथा च शब्दस्यापि नित्यत्वापत्तिः तेन बाधः सत्प्रतिपक्षो वा तद्दे शनाभासा चेयं एवमनित्यत्वं यदि नित्यं कथं शब्दस्यानित्यतां कुर्य्यात् नहि रक्तं महारजनं परस्य नीलतां सम्पादयति अथानित्यं तदा तदभावदशायां अनित्यत्वं न स्यादित्यादिक मूह्यं एतदनुसारेण लक्षणमपि कार्य्यमित्याचार्य्याः वयन्तु अनित्यस्य भावोधर्मस्तस्य नित्यमभ्युपगमेऽनित्यत्वेनाभ्युपग तस्य नित्यत्वं स्यात् यथा क्षितिः सकर्तृकेत्यत्र अनित्यक्षितेर्धर्मः

सकर्तृकत्वं तथा चितेः नित्यमुपेयते नवा नचेत् तदा बाध्या ५ अध्याय
भावादतोबाधः अथ चितेः नित्यमेव सकर्तृकत्वमुपेयते तदा
चितेर्नित्यत्वं स्यादिति सकर्तृकत्वं विरुद्धं तद्दूषणाभासा चेय
मिति ब्रूमः ॥ ३५ ॥

अत्रोत्तरमाह ।

प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोप
पत्तेः प्रतिषेधाभावः ॥ ३६ ॥

प्रतिषेध्ये मत्पक्षे शब्दे सर्व्वदा अनित्यभावात् अनित्यत्वात्
अनित्ये शब्दे अनित्यत्वमुपपद्यते नहि सम्भवति अनित्यत्वं
नित्यमस्ति अथ च तन्नित्यमिति व्याघातात् नच नित्यमिति
सर्व्वकालमित्यर्थः तथाच शब्दस्यानित्यत्वे कथं सर्व्वकालमनि
त्यत्वसम्बन्धइति वाच्यं सर्व्वकालमित्यस्य यावत्सत्त्वमित्यर्थात्
अतः त्वत्कृतः प्रतिषेधोन सम्भवति मतान्तरे तु अनित्येऽनित्य
त्वोपपत्तेः हेतोस्त्वपायः प्रतिषेधः इतः स न सम्भवतीत्यर्थः
॥ ३६ ॥

इति नित्यसमप्रकरणं ॥ ७२ ॥

कार्य्यसमं लक्षयति ।

प्रयत्नकार्य्यानेकत्वात् कार्य्यसमः ॥ ३७ ॥

प्रयत्नकार्य्यस्य प्रयत्नसम्पादनीयस्यानेकत्वात् . अनेक

५ अध्यायः विधत्वात् अयमर्थः शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादि त्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्य्ये घटादौ प्रयत्नानन्तरो पलभ्यमाने कीलकादावपि दृष्टन्तच द्वितीयं न तज्जन्यत्वसाध कं आद्ये तु असिद्धं तथाच सामान्यतउक्ते हेतोरनभिमतविशेष निराकरणेन प्रत्यवस्थानं कार्य्यसमा असिद्धदेशनाभासा चेयं अथवा प्रयत्नकार्य्याणां प्रयत्नकर्त्तव्यानां कर्त्तव्यप्रयत्नानामि ति यावत् तादृशानां अनेकविधत्वादुक्तान्यस्वव्याघातकमुत्तरं कार्य्यसमा तथा चास्या आकृतिगणत्वात्सूत्रानुपदर्शितानामपि परिग्रहः यथा त्वत्पक्षे किञ्चिद्दूषणं भविष्यतीति शङ्काऽपि शाठीसमा कार्य्यकारणभावस्योपकारनियतत्वेऽनवस्थेत्यनुप कारसमाइत्यादि ॥ ३७ ॥

अत्रोत्तरं।

कार्य्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोप पत्तेः ॥ ३८ ॥

शब्दस्य कार्य्यान्यत्वेऽकार्य्यत्वे प्रयत्नस्य वक्तृप्रयत्नस्य अहे तुत्वं अकारणत्वं इदञ्च तदा स्यात् यद्यनुपलब्धिकारणमा वरणादिकमुपपद्यते नच तच्छब्देऽस्तीत्यर्थः आकृतिगणपक्षे तु कार्य्याणां जातीनामन्यत्वे नानाविधत्वे इदमुत्तरं प्रयत्नस्य त्वदीयदूषणप्रयत्नस्य अहेतुत्वं असाधकतासाधकत्वाभावः

उपलब्धेः कारणस्य प्रमाणस्य निर्दोषवाक्यस्य या उपपत्तिः ५ अथवा निर्दोषवाक्याधीनोपपादनं तदभावात् तद्वाक्यस्य व्याघात कत्वादित्यर्थः ॥ ३८ ॥

इतिकार्य्यसमप्रकरणं ॥ ७४ ॥

कार्य्यसमप्रकरणस्य एवं तावज्जातिवादिनं प्रति सर्व्वत्र सदुत्तरेणैवोद्धारः कार्य्यइत्यभिहितं तदेवाभिमततत्वनिर्णय विजयफलकत्वं कथायां सम्पद्यते असदुत्तरोद्भावने तु वन्ध्य योः संप्रयोगवन्नाभिमतफलसिद्धिरिति व्युत्पादयितुं कथाभास रूपां षट्पक्षीं शिष्यशिक्षायै प्रदर्शयति ।

प्रतिषेधोऽपि समानोदोषः ॥ ३९ ॥

प्रयत्नानन्तरीयकत्वं न शब्दानित्यत्वं साधयति अनैका न्तिकत्वादिति योदोषः स त्वत्पक्षेऽपि तुल्यः प्रयत्नाभिव्यङ्ग्यत्व स्याप्यसाधकत्वात् अथवा अनैकान्तिकत्वादसाधकइति त्वया प्रतिषेधः कृतः तत्राप्ययं दोषः समानः नह्यनैकान्तिकत्वं सर्व्व स्यैवासाधकत्वं साधयति स्वस्यैवासाधकत्वासाधनत्वात् ॥ ३८ ॥

सेयं मतानुज्ञा किं कार्य्यसमायामेव नेत्याह ।

सर्व्वत्रैवं ॥ ४० ॥

एवंविधमसदुत्तरं सर्व्वत्रैव जातौ सम्भवतीत्यर्थः यथा

५ अध्यायः शब्दोऽनित्यः शब्दत्वादित्यत्र नित्याकाशसाधर्म्यादमूर्त्तत्वा न्नित्यः स्यादिति साधर्म्यसमायां आकाशसाधर्म्यान्नित्यत्वे आकाशवच्छब्दे परममहत्त्वं स्यादित्युत्कर्षसमा एवमन्यत्रा प्यूह्यं यद्यप्ययमतिदेशः षट्पक्ष्यनन्तरमेव कर्त्तुमुचितस्तथापि त्रिपक्ष्यादिकमपि सूचयितुमत्रैवोक्तः उभयासम्यक्त्वबोध फला हि षट्पक्षी त्रिपक्ष्यादावपि तत्फलकत्वं तुल्यमिति भावः तर्हि त्रिपक्ष्यामेव मध्यस्थेन पर्य्यनुयोज्योपेक्षणस्योद्भा वने कथासमाप्तौ कुतः षट्पक्षीति चेत् पुंसां स्फुरणवैचित्र्येण तत्सम्भवात् ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधवद्दोषः ॥ ४१ ॥

तुल्यबलविरोधोविप्रतिषेधः तथाच प्रतिषेधस्य योविप्रति षेधस्तत्र प्रतिषेधदोषवद्दोषइत्यर्थः तथाहि शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनावादिनः प्रथमः पक्षः प्रयत्नकार्य्यानेकत्वात् कार्य्यसमइति प्रतिवादिनोद्वितीयःपक्षः प्रतिषेधाप्रतिषेधेऽप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षः विप्रतिषेधस्तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषो द्भावनं वा चतुर्थःपक्षः ॥ ४१ ॥

पञ्चमं पक्षमाह।

प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानप्रसङ्गो मतानुज्ञा ॥ ४२ ॥

प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तत्र मदुक्तं दोषमनुद्धृत्य प्रतिषेधविप्रतिषेधे मदीयपक्षे तृतीये समानं दोषं प्रसञ्जयतस्तव मतानुज्ञानामकं निग्रहस्थानमित्यर्थः ॥ ४२ ॥

षष्ठं पक्षमाह।

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ॥ ४३ ॥

स्वपक्षः स्थापनारूपः प्रथमः पक्षः तं लक्षीकृत्य प्रवृत्तो द्वितीयपक्षः स्वपक्षलक्षणस्तस्यापेक्षा समादरः तत्र दोषानुद्भावनमिति फलितार्थः तथाच मदीयपक्षे दोषमनुद्भाव्यैव स्वपक्षोपपादनं कर्त्तुं यस्त्वया हेतुर्निर्दिष्टः प्रतिषेधेऽपि समानो दोष इति तावता तवापि मतानुज्ञा वृत्तैवेत्यर्थः तदेवं षट्पक्ष्यामुभयोरप्ययुक्तवादित्वादर्थासिद्धिः यदि तु स्थापनावादी जातिवादिनं सदुत्तरेणैव दूषयति तदा षट्पक्षी न प्रवर्त्तत इति ॥ ४३ ॥

इति कथाभासप्रकरणं ॥ ७५ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ पञ्चमोऽध्यायस्याद्यमाह्निकं ॥ १ ॥

५ अध्यायः अथेदानीं निग्रहस्थानविशेषलक्षणाभिधानं तदेव चाह्निकार्थः सप्त चेह प्रकरणानि तत्र चाद्यं प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणं अन्यानि च यथास्थानं वक्ष्यन्ते तत्र विशेषलक्षणार्थमादौ विभजते।

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभाविक्षेपो मतानुज्ञापर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ ४४ ॥

अत्र चस्त्वर्थे तेन एतानि तु निग्रहस्थानानि न पुनरपस्मारादिनाऽननुभाषणादिकं न वा झटिति स्मरणेन तिरोहिता च वाणीत्यर्थो लभ्यंतइति प्राञ्चः नव्यास्तु चकारोऽनुक्तसमुच्चये तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः ॥ ४४ ॥

तत्र क्रमेण प्रतिज्ञाहान्यादीनां लक्षणेषु वक्तव्येषु प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति।

प्रतिदृष्टान्तधर्म्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ ४५ ॥

प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः स्वः स्वीयः

दृष्टान्तोयत्र स स्वदृष्टान्तः स्वपक्षः तथाच स्वपक्षे परपक्षधर्मा ५ अध्यायः
नुज्ञा प्रतिज्ञाहानिः स्वयं विशिष्याभिहितपरित्यागइति फलितार्थः सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयतइति नाप सिद्धान्तसाङ्कर्य्यं सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति यथाशब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया वाधितविषयोऽयमित्युत्तरिते अस्तु तर्हि घटएव पक्ष इति एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति एवं पर्व्वतोवह्निमान्धूमाद्योगोलकवदित्युक्ते दृष्टान्तः साधनविकलइति प्रत्युक्ते अस्तु तर्हि महानसवदिति एवं अत्रैव सिद्धसाधने च प्रत्युक्ते अस्तुतर्हि इन्धनवानिति अन्यहानिस्तु विशेषणहान्यादिः यथा तत्रैव नीलधूमादित्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतुरित्यादि ॥ ४५ ॥

प्रतिज्ञान्तरं लक्षयति ।

प्रतिज्ञातार्थप्रतिषेधे धर्म्मविकल्पात्तदर्थनिर्द्देशः प्रतिज्ञान्तरं ॥ ४६ ॥

प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्म्मस्य धर्म्मान्तरस्य विशिष्टःकस्योविकल्पः तस्माद्विशेषणान्तर विशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः प्रतिषेध

ध्यायः इत्यनेन झटिति सम्बरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे न दोषइत्युक्तं प्रतिज्ञातार्थस्येत्युपलक्षणं हेत्वतिरिक्तार्थस्येति तत्त्वं तेन उदाहरणान्तरमुपनयान्तरञ्च प्रतिज्ञान्तरत्वेन संगृहीतं भवति इदञ्च पक्षसाध्यविशेषणभेदात् प्रत्येकं द्विविधं यथा शब्दोऽनित्यइत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्षइति प्रतिज्ञान्तरं नचेदमर्थान्तरं प्रकृतोपयोगात् नचेयं प्रतिज्ञाहानिः पूर्व्वातत्त्वापरित्यागात् एवं पर्व्वतोवह्निमान्सुरभिमलिनधूमवत्त्वादित्युक्ते असमर्थविशेषणत्वेन च परेण प्रत्युक्ते कृष्णागुरुप्रभववह्निमानित्यत्र एवं तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान् सवह्निमानित्युदाहरणे न्यूनत्वेन प्रत्युक्ते स तादृशवह्निमानित्यत्र एवमन्यदप्यूह्यं ॥४६ ॥

प्रतिज्ञाविरोधं लक्षयति ।

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४७ ॥

अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे तथाच कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः यद्यपि काञ्चनमयः पर्व्वतोवह्निमान् पर्व्वतः काञ्चनमयवह्निमान् ह्रदोवह्निमान् ह्रदत्वात् पर्व्वतोवह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्य्यं तथाप्युपधेयसङ्करेऽप्युपाधेरसाङ्कर्य्या

स दोषः नचासङ्कीर्णत्वाभावः पर्व्वतोवह्निमान् धूमात् योयो ५ अध्यायः धूमवान् स निरग्निरित्युदाहरणे निरग्निश्चायमित्युपनयेच तत्सत्वात् एवं निगमनेऽपि बोध्यं ॥ ४७ ॥

प्रतिज्ञासन्न्यासं लक्षयति ।

**पक्षप्रतिषेधे प्रतिज्ञातार्थस्यापनयनं प्रतिज्ञा संन्यासः ॥ ४८ ॥**

पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलापइत्यर्थः यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते कएवमाह शब्दोनित्यइति ॥ ४८ ॥

हेत्वन्तरं लक्षयति ।

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरं ॥ ४९ ॥**

अत्र च हेतावित्यनेन हेत्ववयवांशेन विवक्षितोऽपि तु साधकांशः स च हेत्ववयवस्यउदाहरणादिस्थोवा अविशेषोक्त इति पूर्व्वोक्तइत्यर्थः विशेषमिच्छतइति साभिप्रायं तेन परोक्त दूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा द्वयमपि हेत्वन्तरं तथाच परोक्तदूषणोद्दिधीर्षया तत्रैव

५ अध्याय: हेतौ पूर्व्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्ट वचनं हेत्वन्तरं हेतौ विशेषणदानएव हेत्वन्तरमिति प्राञ्चः पूर्व्वोक्तत्वं हेत्ववयवे उदाहरणादौ वा यथा शब्दोऽनित्यः वाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणं एवं विशिष्टहेतुमुक्त्वा यद्वाह्येन्द्रिय प्रत्यक्षं तदनित्यमित्युदाहरणे न्यूनत्वेन प्रत्युक्ते विशिष्टोक्तौ एवमुपनयविशेषणेऽपि ॥ ४९ ॥

समाप्तं प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहपञ्चकविशेषलक्षणप्रकरणं ॥ ७६ ॥

अर्थान्तरं लक्षयति ।

प्रकृतादर्थादसम्बद्धार्थमर्थान्तरं ॥ ५० ॥

प्रकृतात्प्रकृतोपयुक्तात् ल्यब्लोपे पञ्चमी तेन प्रकृतोपयुक्त मर्थमुपेक्ष्यासम्बद्धार्थाभिधानं अर्थान्तरं प्रकृतानाकाङ्क्षिता भिधानमिति फलितार्थः यथा शब्दोऽनित्यः कृतकत्वादित्युक्त्वा शब्दोगुणः सचाकाशस्येत्यादि ॥ ५० ॥

निरर्थकं लक्षयति।

वर्णक्रमनिर्देशवन्निरर्थकं ॥ ५१ ॥

वर्णानां क्रमेण निर्देशः जबगडदशेत्यादिप्रयोगस्तत्तुल्यमभि

ईदृशो निरर्थकं निग्रहस्थानं अवाचकपदप्रयोग इति फलितार्थः ५ अध्यायः
वाचकत्वं शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यं
समयबन्धव्यतिरेकेणेति विशेषणीयं तेन यत्रापभ्रंशेन विचारः
कर्त्तव्य इति समयबन्धस्तत्रापभ्रंशे न दोषः झटिति सम्वरणे तु
न दोष इत्युक्तप्रायं अस्य सम्भवः प्रमादादित्यवधेयं ॥ ५१ ॥

अविज्ञातार्थं लक्षयति ।

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातम
विज्ञातार्थं ॥ ५२ ॥

त्रिरभिहितं वादिनेति शेषः त्रिरभिधानं चानवधानादि
नाऽबोधनिरासाय परिषत्प्रतिवाद्यन्यतरेण विज्ञाते तु नावि
ज्ञातार्थमिति भावः तथाच अवहिताविकलव्युत्पन्नपरिषत्प्रति
वादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञाता
र्थमिति वाचकेत्यनेन निरर्थकापार्थकव्युदासः अत्र च
पराज्ञानापादनेन मम जयो भविष्यतीति भ्रमादुक्तिसम्भवः
नच यथाकथञ्चित्परो जेतव्य इत्यज्ञानापादनं न्याय्यमेवेति
वाच्यं तथासति भङ्गकाले परमदुर्व्वोधयत्किञ्चिदभिधानेनैव
सर्व्वत्र जयसम्भवात् एतस्य त्रेधासम्भवः असाधारणतन्त्रमात्र
प्रसिद्धं यथा पञ्चस्कन्धादयो बौद्धानान्तत्र रूपादयः पञ्चेन्द्रि
याणि च रूपस्कन्धः सविकल्पकं संज्ञास्कन्धः रागद्वेषाभि

५ अध्यायः निवेशाः संस्कारस्कन्धः सुखदुःखे वेदनास्कन्धः निर्विकल्पकं ज्ञानस्कन्धः द्वितीयमति प्रसक्तयोगमनपेक्षितरूढिकं यथा कृष्णपतनयाधृतिहेतुरयं चित्तवनसमाननामधेयवान् तल्के तुमत्त्वादित्यादि तृतीयं श्लिष्टं यथा श्वेतोधावतीत्यादि एवं अतिद्रुतोच्चरितादिकमपीति भाष्यं अत्र नाद्यस्य सम्भवउभय तन्त्राभिज्ञमध्यस्थे सति उभयतन्त्राभिज्ञयोरेव विचारसम्भ वादिति चेत् सत्यं तथापि यत्र नैयायिकमीमांसकयोर्विचारे ऽन्यतरोबौद्धतन्त्रादिपरिभाषया वदतितत्र निग्रहइत्याशयः तत्रापि चेत् यथा कयाचित् परिभाषयोच्यतामिति परः प्रौढ्या वदतिन तत्राद्यस्योपादानमिति उत्तरयोस्तु न सर्व्वथै वेति ॥ ५२ ॥

अपार्थकं लक्षयति ।

पौर्व्वापर्य्यायोगादप्रतिसम्बद्धार्थमपार्थकं ॥ ५३ ॥

पौर्व्वापर्य्यं कार्य्यकारणभावस्तस्यायोगादसम्भवात् शाब्द बोधजनकाकाङ्क्षाज्ञानाद्यभावादिति फलितार्थः अप्रतिसम्ब द्धोऽसम्बद्धोऽर्थःप्रयोजनंशाब्दबोधरूपंयत्र यद्यपि दश दाडि मानि षडपूपाः कुण्डमजाजिनमित्यादाववान्तरवाक्यादर्थ बोधसत्त्वादव्याप्तिरतिव्याप्तिश्च निरर्थके तथाप्यभिमतवाक्यार्थ बोधानुकूलाकाङ्क्षादिशून्यबोधजनकपदत्वं तत् अविज्ञाताप

तु सत्तु बोधोभवत्येवेति नातिव्याप्तिः उदाहरणन्तु अथो ५ अध्यायः ग्यानाथन्नामाकाङ्क्षवाक्यं ॥ ५२ ॥

समाप्तमभिमतवाक्यार्थाप्रतिपादकनिग्रहस्थानचतुष्टय प्रकरणं ॥ ७५ ॥

अप्राप्तकालं लक्षयति।

अवयवविपर्य्यासवचनमप्राप्तकालं ॥ ५४ ॥

अवयवस्य कथैकदेशस्य विपर्य्यासोवैपरीत्यं तथाच समय बन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानं पर्य्यवसन्नं तत्राद्यं क्रमः वादिना साधनमुक्ता सामान्यतोहेत्वाभासाउद्ध रणीयाइत्येकः पादः प्रतिवादिनस्तु तत्रोपालम्भोद्वितीयः पादः प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणञ्चेति तृतीयः पादः जयपराजयव्यवस्था चतुर्थः पादः एवं प्रतिज्ञा हेत्वादीनां क्रमः तत्र सभाक्षोभव्यामोहादिना व्यत्यस्ताभि धानमप्राप्तकालमिति ॥ ५४ ॥

न्यूनं लक्षयति।

हीनमन्यतमेनाप्यवयवेन न्यूनं ॥ ५५ ॥

अवयवेन स्वशास्त्रसिद्धेन तेन सौगतस्य द्व्यवयवाभिधाने ऽपि न न्यूनत्वं मन्यवयवहीनत्वं अवयवत्वावच्छिन्नाभावः तथाचा

५ अध्यायः कथनमेव स्यादतश्चाह्नान्यतमेनापीति तथाच यत्किञ्चिदव यवशून्यावयवाभिधानं फलितं नचायमपसिद्धान्तः सिद्धान्त विरुद्धानभ्युपगमात् अपितु सभाक्षोभादिनाऽनभिधानात् ॥ ५५ ॥

अधिकं लक्षयति।

हेतूदाहरणाधिकमधिकं ॥ ५६ ॥

हेतूदाहरणेत्युपलक्षणं दूषणाद्यधिकमपि बोध्यं तथाच कृतकर्त्तव्यापुनरुक्ताभिधानमिति फलितं अनुवादस्तु न कृत कर्त्तव्यः साभिप्रायत्वात् प्रतिज्ञाधिकञ्च पुनरुक्तं धूमादा लोकात् महानसवच्चत्वरवदित्यादिकन्तु विना समयबन्धं दार्ढ्यादिभ्रमादुक्तमधिकं यथा महानसं महानसवदिति तु नाधिकं किन्तु पुनरुक्तं ॥ ५६ ॥

समाप्तं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानचिक प्रकरणं ॥ ७६ ॥

पुनरुक्तं लक्षयति।

शब्दार्थयोः पुनर्व्वचनं पुनरुक्तमन्यत्रानुवा दात् ॥ ५७ ॥

पुनर्व्वचनं पुनरुक्तं तच्च विविधमित्यर्थं शब्दार्थयोरिति तेन शब्दपुनरुक्तमर्थपुनरुक्तञ्च लभ्यते अनुवादेऽतिव्याप्तिवार

ख्यातस्यानुवादादिति अनुवादान्यत्वे सतीत्यर्थः निष्प्रयो ५ अध्यायः
जनं पुनरभिधानं हि पुनरुक्तं अनुवादस्तु व्याख्यारूपः सप्रयो
जनक एवेति भावः तथाच समानार्थकपूर्व्वानुपूर्व्वीकशब्द
प्रयोगः शब्दपुनरुक्तं समानार्थकभिन्नानुपूर्व्वीकशब्दस्य निष्प्र
योजनं पुनरभिधानमर्थपुनरुक्तं आद्यं यथा घटोघटइति
द्वितीयं यथा घटः कलसइति एतच्च प्रमादादिना सम्भवः
॥ ५७ ॥

पुनरुक्तप्रभेदान्तरमाह ।

अर्थादापन्नस्य स्वशब्देन पुनरभिधानं ॥ ५८ ॥

पुनरुक्तमित्यनुवर्त्तते यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रति पत्तिर्भवति, तस्य तेन रूपेण पुनरभिधानं पुनरुक्तं इदमेव च अर्थपुनरुक्तमिति गीयते यथा वह्निरुष्णइति पूर्व्वपदाच्छिन्नो क्तिरियं उष्णोवह्निरिति उत्तरपदाच्छिन्नोक्तिः एवं वह्निरस्ति गेहे नास्तीति विध्याच्छिन्नोक्तिः जीवन् गेहे नास्ति वह्निरस्तीति निषेधाच्छिन्नोक्तिः पुनरुक्तद्वैविध्यञ्चेदम्भाष्यादिसम्मतं अन्ये तु शब्दपुनरुक्तं द्विविधं तस्यैव शब्दस्य पुनरभिधानं पर्य्यायेणाभि धानं अन्यत्पुनरर्थपुनरुक्तमित्याहुः ॥ ५८ ॥

५ अध्यायः अननुभाषणं लक्षयति ।

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यनुच्चार णमननुभाषणं ॥ ५९ ॥

परिषदा विज्ञातस्य विशिष्य बुद्धार्थस्य वादिना त्रिभिरभिहितस्य तथाच प्रथमवचनेऽननुभाषणे वादिना वारत्रयं वाच्यमिति दर्शितं तथाच त्रिरभिधानेऽपि यत्रानुभाषणविरोधी व्यापारः तत्राननुभाषणं निग्रहस्थानमित्यर्थः अज्ञानसाङ्कर्य्यनिरासायाज्ञानमनाविष्कुर्व्वतेति विक्षेपसाङ्कर्य्यनिरासाय कथामविच्छिन्दतेति च विशेषणीयमित्याचार्य्याः नचाप्रतिभासाङ्कर्य्यं उत्तरप्रतिपत्तावपि सभाक्षोभादिनाऽननुभाषणसम्भवात् तदिदं चतुर्धा एकदेशानुवादाद्विपरीतानुवादात् केवलदूषणोक्त्या सर्व्वमनेनेति सर्व्वनामपदेनानुवादात् पञ्चममित्याचार्य्याः क्वचिदज्ञानाप्रतिभाऽननुभाषणासाङ्कर्य्यं यन्निरसितुं शक्यते तदेवोद्भाव्यं ॥ ५८ ॥

अज्ञानं लक्षयति ।

अविज्ञातं चाज्ञानं ॥ ६० ॥

भावे क्तः चकारस्य परिषदा विज्ञातस्येत्याद्यनुकर्षणार्थस्तथाच परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याविज्ञानमित्यर्थः इदञ्च किम्वदसि बुध्यत एव नेत्याद्याविष्करणेन ज्ञातुं शक्यतइति ॥ ६० ॥

अप्रतिभां लक्षयति ।

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ ६१ ॥

उत्तरार्हं परोक्तं बुद्ध्वाऽपि यत्रोत्तरसमये उत्तरं न प्रतिपद्यते तत्राप्रतिभा निग्रहस्थानं न चात्राननुभाषणस्यावश्यकत्वात् तदेव दूषणमस्त्विति वाच्यं परोक्ताऽननुवादे हि तत् यत्र परोक्तमनूद्यापि नोत्तरं प्रतिपद्यते तत्राप्रतिभा स्यात् स्वसूचनश्लोकपाठाद्युन्नेया चेयं ॥ ६१ ॥

विक्षेपं लक्षयति ।

कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ ६२ ॥

कार्य्यव्यासङ्गात्कार्य्यव्यासङ्गमुद्भाव्येत्यर्थः ल्यब्लोपे पञ्चमी कार्य्यव्यासङ्गस्यासम्भवात्कालान्तरकलेनारोपितः तेन तादृशकथाविच्छेदो विक्षेपः तेन राजपुरुषादिभिराकारणे गृहजनादिभिर्व्वावश्यककार्य्यार्थमाकारणे स्वगृहदाहादिकं पश्यतो गमने वा शिरोरोगादिना प्रतिबन्धे वा न विक्षेपः ननु कार्य्यव्यासङ्गोद्भावनं कुतः सभाक्षोभादिना चेदननुभाषणमेव उत्तराप्रतिपत्त्या चेदप्रतिभैवेति चेन्न उत्तरावसराभावात् वस्तुतस्तूत्तरस्फूर्त्तावपि तद्दूषणसम्भावनया विक्षेपसम्भवात् यथा क्षितिः सकर्तृका कार्य्यत्वादित्युक्तं अत्राङ्कुरे व्यभिचारस्तावन्मया उद्भाव्यस्तत्र चेदयं पक्षसमलं ब्रूयात् तदा मे

५ अध्यायः किमुत्तरमतोऽत्र महार्णवलिखितं मया च विचारितं किञ्चि
त्कार्य्यमुद्भाव्य गृहे गत्वा द्रष्टव्यमित्येवं विक्षेपस्सम्भवति ॥ ६२ ॥

मतानुज्ञां लक्षयति ।

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ ६३ ॥

दोषाभ्युपगमात् दोषमनुद्धृत्येत्यर्थः यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोऽयमित्युक्ते शब्दोऽनित्यः कृतकत्वादिति साधिते ध्वनेरपि पक्षत्वान्न दोष इत्युक्ते असिद्धत्वात् तवापि हेत्वाभासोऽयमित्युक्ते सोऽयं मतानुज्ञया निगृहीतः स्यादप्रतिषिद्धमनुमतं भवतीति स्वपक्षे दोषाभ्युपगमात् ॥ ६३ ॥

पर्य्यनुयोज्योपेक्षणं लक्षयति ।

निग्रहस्थानप्राप्तस्यानिग्रहः पर्य्यनुयोज्योपेक्षणं ॥ ६४ ॥

निग्रहस्थानं प्राप्तवतोऽनिग्रहः निग्रहस्थानानुद्भावनमित्यर्थः यत्र त्वनेकनिग्रहस्थानपाते एकतरोद्भावनं तत्र न पर्य्यनुयोज्योपेक्षणं अवसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव तत्त्वात् ननु वादिना कथमिदमुद्भाव्यं स्वकौपीनविवरणस्यायुक्तत्वादिति चेत् सत्यं मध्यस्थेनैवेदमुद्भाव्यं वादे च स्वयमुद्भावनेऽप्यदोषः ॥ ६४ ॥

निरनुयोज्यानुयोगं लक्षयति

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ ६५ ॥

अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः एतेनानवसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः सोऽयं चतुर्धा छलं जातिराभासोऽनवसरग्रहणञ्च आभासो व्यभिचारादावसिद्ध्याद्युद्भावनं अनवसरग्रहणञ्चाकाले एवोद्भावनं यथा त्यच्यसि चेत् प्रतिज्ञाहानिः विशेषयसि चेत् हेत्वन्तरं एवमवसरमतीत्य कथनमपि यथा उच्यमानया व्याप्यापभ्रंशादेः परिसमाप्तौ एवमनुक्तयाश्च्याज्ञानाद्यननुभाषणावसरेऽनुद्भाव्य बोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यं ॥ ६५ ॥

अपसिद्धान्तं लक्षयति।

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः ॥ ६६ ॥

सिद्धान्तं स्वशास्त्रकाराभ्युपगतमर्थं स्वीकृत्य नियमान्नियमं प्रच्यवात् कथाप्रसङ्ग इति तथाच कथायां स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्तः तथाच सांख्यमतेनाहं वदिष्या

५ अध्यायः सोऽत्यभ्युपेत्यारब्धायां कथायां आविर्भावस्याविर्भावाभ्युपगमे ऽनवस्थेति दूषणोद्धारायाविर्भावस्यासतः उत्पत्तिं अभ्युपैति तदाऽपसिद्धान्तः यत्त्वेकदेशिमतेन कथामारभते तस्य शास्त्रकाराभ्युपगमविरोधे नापसिद्धान्त इति विबोधयितुमभ्युपेत्येत्युक्तं सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्त इत्यन्यदेतत् ॥६६॥

क्रमप्राप्तहेत्वाभासलक्षणे वक्तव्ये तदकथनबीजमाह ।

हेत्वाभासाश्च यथोक्ताः ॥ ६७ ॥

चः पुनरर्थे हेत्वाभासाःपुनर्यथा येन रूपेण पूर्व्वमुक्ताः तेनैव रूपेण तेषांनिग्रहस्थानत्वमिति न लक्षणान्तरमपेक्षितमिति अत्र चकारस्य दृष्टान्ते साधनवैकल्यादिसमुच्चायकत्वमिति केचित् तन्न यथोक्तादित्यस्यानन्वयापत्तेरिति ॥ ६७ ॥

समाप्तं निग्रहस्थानविशेषलक्षणं ।

समाप्तं पञ्चमस्य द्वितीयाह्निकं ॥ एषा मुनिप्रवरगोतमसूत्रवृत्तिः श्रीविश्वनाथकृतिना सुगमाल्पवर्णा । श्रीकृष्णचन्द्रचरणाम्बुजचञ्चरीकश्रीमच्छिरोमणिवचःप्रचयैरकारि ॥ इति श्रीमहामहोपाध्याय श्रीविद्यानिवासभट्टाचार्य्यात्मजश्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ पञ्चमोऽध्यायः समाप्तः ॥

---